नृपोत्कर्षामर्षान्तरिततपसं भार्गवमणिम् ॥
प्रभावोत्साहाप्तैः प्रणतमकरोच्छौर्य्यबचनैः—
प्रपद्येश्रीमन्तं, कृपणशरणं लक्ष्मणमुनिम् ॥६॥

( अन्वयः ) कृतोद्वाहः, निमिनगरतः, कोशलपुरीं गच्छन्, नृपोत्कर्षामर्षा न्तरिततपसं भार्गवमणिम्, प्रभावोत्साहाप्तैः शौर्यबचनैः, ( यः ) प्रणतम्, अकरोत्, तं, श्रीलक्ष्मणमुनिं, प्रपद्ये-

( व्याख्या ) कृतउद्वाहोयेनासौकृतोद्वाहो विहितपरिणयः, निमेर्नगरंनिमिनगरं तस्मान्निमिनगरतो, जनकपुरात्, ( पञ्चम्यास्तसिल् वोध्यः ) कोशलपुरीमयोध्याम्, गच्छन् व्रजन्, नृपाणांक्षत्रियजातीनामुत्कर्षोऽभ्युदयस्तस्यामर्षोऽसहनं तेनान्तरितंखण्डितं तपःस्वधर्मानुष्ठानं यस्य तं तथोक्तम्, भृगोरपत्यं ( भृगुवंशे भवइतियावत् ) भार्गवः सएवमणिस्तं परशुरामम्, प्रभावश्चोत्साहश्च प्रभावोत्साहौ, ताभ्यामाप्तास्ते स्तथोक्तैः कोषदण्डजोत्पन्नतेजःप्रभुशक्तिभरितैः, ( सप्रभावः प्रतापश्च यत्तेजःकोषदण्डजमित्यमरः ) शूरस्यभावःशौर्यं तस्य वचनानि तैस्तथोक्तै वीरत्वबोधकवाक्यैः, यः श्रीलक्ष्मणमुनिः, प्रणतंनम्रम्, अकरोत्, व्यदधात्, तं श्रीलक्ष्मणमुनिं प्रपद्ये, यः परशुरामःप्रतिज्ञयैकविंशतिवारं क्षत्रियरहितं लोकमकार्षीत्तमपि वीरत्वसूचक बचनेनैवायंहीनशक्तिमनयदिति लोकोत्तरमस्यबीरत्वमितिवस्तुध्वन्यते—

(तात्पर्य)तदेवं,कैङ्कर्य्यस्य परमपुरुषार्थरूपत्वं निरुपाधिकत्वञ्चप्रति

पाद्यतदुपायस्यासह्यापचाराणामार्द्रापराधानामप्यवलम्बनीयतां परशुरामवृन्तान्तेन प्रकटयन्तस्तादृशोपायाङ्गीकारोऽपि जामदग्नेर्लक्ष्मणवचनेनैव सिद्ध इति लक्ष्मणस्यलोकोत्तरकारुण्य मनवधिक शौण्डीर्यञ्च प्रतिपादयन्ति कृतोद्वाह इत्यादिना । "कृतोद्वाहो गच्छन्निमिनगरतः कोशलपुरीमित्यनेन परशुरामस्य मङ्गलकालेऽमङ्गलचिकीर्षापूर्वकागमनस्य द्योतनेन मार्गेऽवस्कन्दनेन मार्गणपाटच्चरसध्रीचीनतायाश्च व्यञ्जनेनासह्यापराधत्वमार्द्रापराधत्वञ्चव्यज्यतेनृपोत्कर्षामर्षान्तरिततपसं भार्गवमणिमित्यनेन" क्रोधाग्निं जमदग्निपीडनभवं सन्तर्पयिष्यन् क्रमादक्षत्रामिह सन्तत्क्षय इमां त्रिःसप्तकृत्वः क्षितिम्" इत्युक्तरीत्यैकस्यकृत एकविंशतिकृत्वःक्षत्रियजातीयानां हननात् स्वजातिद्वेषित्वादसह्यापचारत्वंरामेणहरधनुर्भङ्गःकृतइतिपरोत्कर्षस्यासहमानतया रामलक्ष्मणादीनां हननार्थमागत्या चार्द्रापराधत्वञ्च दृढीक्रियते । प्रभावोत्साहाद्यैः प्रणतमकरोच्छौर्य्यवचनै रित्यनेन यक्षानुरूपोबलिः पिशाचानां पिशाचभाषयैवोत्तरं देयमितिन्यायानुसारेण तत्तदनुगुणवचनैः प्रणामं कारितवान् इत्यतःसर्वेष्वपि जन्तुषुलोकोत्तरकारुण्यं भगवत्कैङ्कर्य्योपायबोधन व्यसनिताच बहुमुखं व्यज्यत इति सर्वं मनाविलम् ॥६॥

(भाषार्थ)विवाह कर जनकपुरसे अयोध्या को जाते हुए अन्यायी राजाओं के अभ्युदय का जो असहनहै उससे खण्डित हो

गईहै तपस्या जिनकी ऐसे परशुराम को भी प्रभाव उत्साह और शौर्य्ययुक्त वचनों से जिन्हौंने नम्र कर दिया ऐसे श्रीलक्ष्मणजीके शरणमें प्राप्तहैं—

( अनेन संक्षेपतोऽरण्यकिष्किन्धोक्तं चरित्रमाह )

गिरौदर्य्यांकुञ्जे बिमलमुनिपुञ्जं सुरमयन्—
दवाग्निंवैदेह्या विरहमरिवंशेषु विसृजन् ॥
सखित्वंसार्वात्म्यं प्रभुमनुचरन् प्राजयतयः—
प्रपद्ये श्रीमन्तं कृपणशरणं लक्ष्मणमुनिम्॥१०॥

( अन्वयः ) गिरौदर्य्यांकुञ्जे, बिमलमुनिपुञ्जं, सुरमयन्, वैदेह्याः विरहं, दवाग्निम् अरिवंशेषु, विसृजन्, प्रभुम्, अनुचरन्, ( यः ) सार्वात्म्यम्, सखित्वम्, प्राजयत ( तं ) श्रीलक्ष्मणमुनिंप्रपद्ये,

( व्याख्या ) गिरौपर्वते, दर्य्यां कन्दरायाम्, ( दरीतुकन्दरो वास्त्रीत्यमरः ) कुञ्जे लतागृहे, ( निकुञ्जकुञ्जौवाक्लीवे लतादिपिहितोदरे, इतिकोषः ) विमलाः निर्धूतपापायेमुनयो महर्षय स्तेषांपुञ्जंसमूहम्, सुरमयन् आनन्दयन्, वैदेह्या जानक्याः, विरहंवियोगम्, एवदवाग्निं, बनवह्निम्, अरीणाँ सपत्नानाम्, वंशेषुकुलेषु वेणुषुच ( रिपौवैरिसपत्नारिद्विषद्द्वेषणदुर्हृद- इत्यमरः ) विसृजन्प्रक्षिपन्, प्रभुं श्रीरामम्, अनुचरन् परिचरन्, सन् ( यः ) सार्वात्म्यं विश्वजनीनम्, सखित्वंसौहार्दम्, प्राजयत सम्पादितवान्, तं श्रीलक्ष्मणमुनिंप्रपद्ये,

(ता.)तदेवं पूर्वतनाभ्याँश्लोकाभ्याँ मुक्तेःस्वरूपं तदुपायस्वरूपञ्च

श्रीलक्ष्मणेन प्रकाशितमिति प्रत्यपादि । इदानीं मोक्षस्वरूपं यथावदवगत्यभगवन्तं प्रपन्नानामुत्तरकृत्यप्रकारोऽपि लक्ष्मणेनैव प्रकाशित इति निरूपयन्ति । तत्र श्रीमद्भिर्भाष्यकारैः परमपदगमनसमये सन्निहितेभ्यः परमार्तेभ्योऽनुमुमूर्षुभ्यः सच्छात्रेभ्य उत्तरकृत्यप्रकारइत्थमन्वग्राहि । तथाहि शरीर यात्राप्रारब्धाधीना, आत्मयात्राच भगवदधीनेत्युभयत्रापि चिन्तानविधेया भगवत्प्रपन्नैः, तर्हिस्वैराचारो विधेयोवेतिचेत्तन्न स्वरूपानुरूपं, परन्तु "स्वापोद्बोधव्यतिकरनिभे भोग मोक्षान्तराले कालंकश्चिज्जगतिविधिना केनचित्स्थाप्यमानानां प्रपन्नानांकर्तव्यपञ्चकंसमस्तिश्रीभाष्यं यथावदवगत्यप्रवर्तनम् । तस्याशक्तौ परांकुशप्रभृति परमर्षिसंदृष्टद्रविडोपनिषदवगतिः । तस्याअप्यशक्तौदेवालयेषु संमार्जनानुलेपनमाला,करणदीपारोपणप्रदक्षिणप्रणामस्तोत्रपाठ वालव्यजनवीजनच्छत्रधारणयात्रावाहनवहनादिकैङ्कर्य्यकरणं, तस्याप्यशक्तौद्वयानुसन्धानम्, तस्याप्यशक्तौ वैष्णवाभिमान्यतयाअवस्थितिरिति । अपिचास्मिल्लोके त्रिविधा,जना,भगवदनुकूला, भगवत्प्रतिकूला उदासीनाश्चेति । तत्रानुकूलेषु चन्दनप्रियतमास्विव परमप्रेम्णा वर्तेत । तत्रप्रतिकूलान्सर्पादीनिवदृष्ट्वा दूरतो विसर्जयेत् । शक्तौसत्यां निगृह्णीयात् अनुभयान्काष्ठलोष्ठादिवन्नाद्रियेत । तत अर्थकामप्रावण्येन यदिभगवदनुकूलानां मनस्तापं विदधीत, तर्हि राजपुत्रापराधाद्राज्ञ इवेश्वरस्य

स्वा तं कलुषं जायेत, यदि धनकामप्रावण्येन प्रतिकूलाननुवर्तेत, तर्हि परिपन्थिसेदनेषु भिदया राज्ञा सहधर्मचारिणीव भगवतावहिष्कृतो भवेत्, यद्यनुभयाननुवर्तेततर्हि रत्नलोष्ठयोरन्तरानभिज्ञश्च भगवता वहिष्कृतोभवेदिति चरमकालेभगवद्भाष्यकारानुगृहीतरीत्या, "आराधनानां सर्वेषां विष्णोराराधनं परम् ॥ ततः परतरं प्रोक्तं तदीयाराधनं परम् ॥ मम मद्भक्त भक्तेषु प्रीति रभ्यधिका भवेत् । तस्मान्मद्भक्तभक्ताश्चपूजनीया विशेषतः, यथाशक्ति निगृह्न यात्देवतागुरुनिन्दकान्, इत्यादि प्रमाणप्रमितपद्धत्या च 'अङ्गीकृत्य सतांप्रसत्तिमसतां गर्वोऽपि निर्वापितः' शुद्धानांतु लभेमहि स्थिरधियां शुद्धान्तसिद्धान्तिनां मुक्तैश्वर्य्यदिनप्रभातसमयासत्तिं प्रसत्तिमुहुः' इत्यादि श्रीसूक्त्यनुसारेणच प्रपन्नैर्भागवतप्रसादने,अभागवतनिग्रहेच यथाशक्ति यतितव्यं,इतीदमाचार्य्यादेशश्रीसूक्तिप्रमाणादिपरामर्शिनां करतलामलकायते, तदेतच्छ्रीलक्ष्मणानुष्ठानेन संवादयन्त्याचार्य्याः गिरौदर्य्यां कुञ्ज इत्यादिना पद्येन, तत्रपूर्वपादेन भागवतप्रसादनं प्रतिपाद्यते, तत्राभागवतनिग्रहादपि भागवतसेवायाः प्राधान्यं प्रथमतो निर्देशेन व्यज्यते, गिरौदर्य्यां कुञ्ज इत्यनेनदुर्ल्लङ्घनानाकोणनिलीनाअपिप्रत्यायनेन तत्र २ गत्वान्वेषमन्वेषं भागवताःप्रसादनीया इति ध्वन्यते, विमलसुनिपुञ्जमित्यनेन स्वार्थकर्तृत्वस्वाधीनकर्तृत्व स्वार्थभोक्तृत्वानुसन्धानादिमलरहिता एव परमैकान्तिन इति

व्यज्यते, द्वितीयपादेन वैदेह्या अपहरणेनाशोकवनिकायामशो कार्हाया महाशोकसंधुक्षणेन, "अनन्या राघवेणाहं भास्करेण प्रभा यथा' इत्युक्तरीत्याभगवदनुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणानन्दिताया इन्दिराया विप्रयोजनेनच भगवत अतिमात्रप्रातिकूल्यव्यवसितानां रावणप्रभृतीनां राक्षसानांहननेनाभागवतनिग्रहः कार्य्य इति सूच्यते, सापराधरावणानुवन्धात्तदीयानामपि हननेना भागवतानुवन्धिनोऽपि यथाशक्तिनिग्राह्या इतिव्यज्यते, तृतीयपादेन वंभागवतप्रसादनभगवद्द्वेषिनिग्रहयोः करण एवस्वरूपस्यसाफल्यंनिरूपाधिकस्वामिनः श्रियःपतेर्निरुत्साद:प्रसादोऽपि प्रजायेतेति प्रख्याप्यत इति सर्वं समञ्जसम् ॥ १० ॥

(भाषार्थ)पर्वत कन्दरा और कुञ्जोंमें श्रेष्ठ मुनिओंको आनन्दित करते हुए जानकीके विरह रूपी दवाग्नि को शत्रुकुल में फेंकते हुए ( विरहरूपी दवाग्निसे शत्रुकुल को भस्म करते हुए ) जिन्होंने श्रीरामचन्द्र जी की सेवा कर सर्वानुकूल सखित्व को प्राप्त किया है उन श्रीमान् दोनों के रक्षक श्रीलक्ष्मण जी के शरण में प्राप्त हैं।

सुदृप्तः सुग्रीवोऽम्बुधिरपिततोराद्धविभवौ,
चतुर्मासातीतेऽपिनकिमुचितं तौ विविदतुः।
तदायुक्त्यादान्तौ शरणमनयद्योऽग्रजपदं,
प्रपद्ये श्रीमन्तं कृपणशरणं लक्ष्मणमुनिम् ॥११॥

( अन्वयः ) सुदृप्तः सुग्रीवः, अम्बुधिरपि ततः,राद्धविभवौ, तौ, चतुर्मासातीते, अपि, उचितम् किम्, इति यदा न विविदतुः तदा युक्त्या दान्तौ' ( यः ) अग्रजपदम् शरणम्' अनयत्' तं श्रीलक्ष्मणमुनिं प्रपद्ये

( व्याख्या ) सुदृप्तः सुगर्वित ' अभिवृद्धश्चः सुग्रीव स्तन्नामकोवानरः' अम्बुधिः समुद्रोऽपि ततो रामात् ( सुग्रीवः ) समुद्रपक्षे ततः सगरसुतेभ्यः ( तत्कुल एवतेषा मुत्पत्तेरिति भावः, राद्धोविवृद्धो विभवऐश्वर्य्यं ययोस्तौ ( राधूधातोःक्त प्रत्ययः ) तौसुग्रीवार्णवौ'चतुर्मासातीतेऽपिविगतवर्षाकालेऽपि' उचितंयोग्यम् किं, सम्प्रति किंविधेयमितिकर्तव्यताज्ञानम्' यदनेनैवावाँवर्द्धितावतोऽस्यसाहाय्य मवश्यमेवकर्तव्यम्'इति यावत्' इति यदायस्मिन्काले नविविदतुः नज्ञातवन्तौतदा तस्मिन्काले युक्त्यासामाद्युपायैः दान्तौकृतदमनौ' ( कर्मभूतौ' इति यावत् दान्तस्तु दमितइत्यमरः )यःश्रीलक्ष्मणमुनिः अग्रजपदं श्रीरामचन्द्रचरणाम्बुजम्' ( पदं व्यवसितत्राण स्थान लक्ष्माङ्घ्रिवस्तुष्वित्यमरः ) शरणं रक्षकम् ( शरणं गृहरक्षित्रोरित्यमरः ) अनयत् प्रापयत् ( द्विकर्मकान्नीधातोः लङ्रूपसिद्धिः )तं श्रीलक्ष्मणमुनिं प्रपद्यइतिपूर्ववत्' ततोराद्ध विभवौ समुद्रपक्षे मारुतिंप्रतिमैनाकवाक्यं "राघवस्यकुलेजातैरुदधिः परिवर्द्धितः, सत्वांरामहितेयुक्तं प्रत्यर्चयति सागरः- वा. रा.सु. काँ. १ सर्ग—तत्रैवमैनाकंप्रति समुद्रस्योक्तिः,अहमि

क्ष्वाकुनाथेन सगरेणाभिवर्द्धितः, इक्ष्वाकुसचिवश्चायं नावसी
दितुमर्हति, इत्यादिप्रमाणमवगन्तव्यम, ( ता. ) पूर्वश्लो
केनानुकूलेषु प्रतिकूलेषुचप्रपन्नस्यवृत्तिःशिक्षिता अधुनासर्वेषा
मपिपदार्थानामाधेयत्व विधेयत्वशेषत्वैर्भगवत्संबन्धेऽनुवर्तमाने
ऽपिभगवदेकरसिकस्वरूपभागवतत्वविरहात् कदाचित्तद्विच्छेदा
द्वाप्रातिकूल्यव्यवसायाभावाच्च पूर्वोक्तकोटिद्वयविलक्षणानामुदा
सीनानांविषयेसमुचितसमयेस्वतःपरतोवाभगवच्छरणागतिर्ग्राह
यितव्येतिमध्यस्थेषुवृत्तिःप्रख्याप्यतेसुहृद इत्यादीना, सगरतनयै
रभिवर्द्धितस्यापि जलधेर्भगवता प्रतिशिश्ये महोदधे, इत्युक्त
रीत्याप्रतिशयने कृतेऽपि भगवत्साहाय्याकरणात् कृतज्ञताया
अप्रकटीकाराच्च माध्यस्थ्यं व्यज्यते, तथा सगरतनयै रभिवर्द्ध
नाच्छाश्वतिको भगवत्सम्बन्धोऽस्तीतिध्वन्यते, अग्निसाक्षिक
कृतसख्यस्यवालिनिधनपूर्वकं लम्भितराज्यस्य किष्किन्धायां
कामप्रावण्येनाकृष्यमाणहृदयस्यातिपतितप्रतिज्ञा निर्वहणकाल
स्यसुग्रीवस्य मैत्रीरूपे भगवत्सम्बन्धेऽनुवर्तमानेऽपि तदनुगुण
प्रतिज्ञानिर्वहणाभावेन तदानीमौदासीन्यव्यक्त्योभयकोटिवि
निर्मोकः प्रतीयते। एवमुदासीनयो रुभयोरपि भगवच्छरणा
गतिग्राहणं तृतीयपादेन वोध्यते, रामस्य समुद्रदहनने प्रोत्साह
नपूर्वकमाग्नेयाद्दप्लोषणभीतस्य जलधेः शरणागतिलम्भाना
द्भगवत्सम्बन्धो ग्राहयितव्य इतिव्यज्यते, सुग्रीवस्यापि, नच
संकुचितःपन्थायेनवाली हतोगतः॥ समयेतिष्ठ सुग्रीव मा

वालिपथ मन्वगाः, इत्युक्तरीत्या नानाप्रकारेण भर्त्सनपूर्वकं भगवत्सम्बन्धापादनाद्येनकेनापि प्रकारेणामहताप्रयासेनापिभ ध्यस्थानाभ्युज्जीवनोपायभूतो भगवत्सम्बन्धः कार्य्यइति ध्वन्यते । तदा सुग्रीवस्य क्षेमार्थं भर्त्सनादिपूर्वकं भगवत्स म्बन्धे विहितेऽपि तस्य स्वतो भगवन्निमित्त्वेन भागवततया तद्भर्त्सनं भागवतापचार इत्यवगत्य पश्चाल्लक्ष्मणेन' 'यच्च शोकाभिभूतस्य श्रुत्वारामस्य भाषितम् ॥ मयात्वं परुषाण्युक्त स्तच्चत्वंक्षन्तुमर्हसीत्युक्तरीत्या क्षमाप्रार्थनाद्भगवत्सम्बन्धा पादनकाले दग्धपटसादृश्यापादनसमर्थभागवतापचारसंभवे तस्यक्षमापणेनैवनिवृत्तिर्विधेयेत्युत्तरवृत्तान्तोऽप्य त्राभिसंहितः११

(भाषार्थ,श्रीरामचन्द्रजीकी कृपासेहीबढ़ाहै विभव जिसकाऐसे अतिगर्व युक्त सुग्रीव और उनके पूर्वजोंसे ( अर्थात् सगरा त्मजोंसे ; अभिवृद्ध समुद्र जब चार महीने ( सुग्रीवने जो प्रतिज्ञा १ की थी और वर्षा ऋतु के २ ) व्यतीत होने पर भी जब सुग्रीव और सागर ने अपने कर्तव्य को नहीं समझा तब सामदामाद्युपायोंसे ३ दमन करकेजिन्होंने श्रीरामचन्द्र जी के शरणमें सुग्रीव और समुद्र को प्राप्त किया उन श्रीलक्ष्मणजी के शरण में प्राप्त हैं—

टिप्पणी—१ सत्यं तेप्रतिजानामित्यजशोकमरिन्दम, करिष्या मितथायत्नंयथाप्राप्स्यसिमैथिलीम् ॥ वा०रा०कि०-काँ०७सर्ग-

२ समासाँश्चतुरः कृत्वा प्रमाणं प्लवगेश्वरः, व्यतीताँस्तान्

मदव्यग्रोविरहान्नावबुध्यते,तारांप्रतिलक्ष्मणस्योक्तिः, ३३सर्ग ३ नच संकुचितः पन्थायेनवाली हतोगतः, समयेतिष्ठ सुग्रीव मा बालिपथ मन्वगाः--३४सर्ग--सुग्रीवंप्रतिलक्ष्मणवाक्यम्, (भावार्थ) जिस समय बालिके भयसे कन्दमूल खाकर समय बितातेहुए सुग्रीवका श्रीरामचन्द्रजीके साथ समागम हुआ उस समय सुग्रीवने अग्निको साक्षी देकर यह प्रतिज्ञा की थी कि यदि आप मेरे इस महान् दुःख को दूर करेंगे तो मैं तनमन धनसे आजन्म आपकी सहायता करूँगा इस हेतु रामचन्द्र जी ने बालि का वध कर सुग्रीव को राज्य पदमें स्थापित किया यही सुग्रीव और रामचन्द्रजीके मध्य मैत्रीका तथा सुग्रीवके राज्यपद प्राप्तिका सूक्ष्म वृत्तान्त है।

सगरनामक महाप्रतापशाली महाराजा ने निन्यान्नवे अश्वमेध यज्ञ करनेके बाद शतक्रतु होनेके लिए अश्वमेधीय घोड़े को छोड़ा, जिसको भयभीत होकर इन्द्रने कपिल मुनिके आश्रम में बांध दिया। साठ हजार सगरके लड़कोंने चारों तरफ उस अश्वको खोजते हुए जब कहीं नहीं पाया तब पृथ्वी को खन डाला और पाताल में जाकर महर्षिके क्रोधाग्नि से भस्म हो गए, महाराजा सगर श्रीरामचन्द्रजीके पूर्वजोंमें से एक प्रतापी महाराजा थे, उन्हीं के पुत्रों द्वारा समुद्र की अभिवृद्धि हुई और सागर नाम पड़ा, यही समुद्र के अभिवृद्धि का सूक्ष्म वृत्तान्त है।

शराद्भ्रातुर्वीर्यस्मरणनिशिताद्भावशिथमघं,
जितेन्द्रं ब्रह्मास्त्रोर्जितमपि दशास्यानुजकृते ।
प्रमथ्नन्तं सेनां रवितनुजनाथां समवधीत्,
प्रपद्येश्रीमन्तं, कृपणशरणं लक्ष्मणमुनिम् ॥१२॥

( अन्वयः भ्रातुर्वीर्य्यस्मरणनिशितात्, शरात्,अघं जितेन्द्रं, ब्रह्मास्त्रोर्जितमपि, रवितनुजनाथां सेनां प्रमथ्नन्तं, रावणिं दशास्यानुजकृते, (यः) समवधीत्, तं श्रीलक्ष्मणमुनिं प्रपद्ये–

( व्याख्या भ्रातुःश्रीरामस्यवीर्यं पराक्रमस्तस्यस्मरणमनुसन्धानन्तेन निशितात्तीक्ष्णीकृतात्, शराद्बाणात्, अघंपापिनम्, ( पापरूपमितियावत् ) जितः स्वाधीनीकृतइन्द्रः पाकशासनोयेनतम्, ( इन्द्रजयेनात्रसर्वदिक्पालजयः सूच्यते तन्मुख्यत्वादितिभावः ) ब्रह्मास्त्रेण विरिञ्चिदत्तायुधविशेषेणोर्ज्जितं बलवत्तरम्, अपि, रवेस्सूर्य्यस्य तनुजः पुत्रः ( सुग्रीवः ) सएव नाथोनायकोयस्याः सातास्, सेनांचमूम्, ध्वजिनीवाहिनीसेना पृतनाऽनीकिनीचमूरितिकोषः, प्रमथ्नन्तं पीडयन्तम्, रावणिं रावणात्मजम्, ( मेघनादम् ) दशास्यस्य रावणस्यानुजोभ्राता ( विभीषणः )तस्यकृतेतदर्थमित्यर्थः,यःश्रीलक्ष्मणमुनिः, समवधीन्मारयामास, तं श्रीलक्ष्मणमुनिं प्रपद्ये –

तदेवं भागवतेषु भगवत्प्रतिकूलेषूदासीनेषुच प्रपन्नानां शास्त्रानुमताचार्य्यादिभिरुपदिष्टाच वृत्तिः श्रीलक्ष्मणस्याचरणेन सदृष्टान्तं समीच्या पद्धत्या प्रत्यपादि । तत्रप्रतिकूलनि

रसनविषयेप्रपन्नै स्तन्मारणादिकं नविधेयन्निषिद्धत्वात् । किन्तर्हि, परावरतत्वयाथात्म्यवेदिनौपनिषदगहनार्थकांतार महाजाङ्घिकेन तत्सिद्धब्रह्मबोधद्युमणिरुचितमस्तोमकल्पा अन्यजल्पतूला, दिक्सौधावद्धजैत्रध्वजपटप्रस्पर्द्धि गुरुवरप्रणीत प्रवन्धप्रकाशितयुक्तिभङ्ग्यामाञ्जसाहाय्येन तत्तत्परिषत्सुसाटो पतर्कच्छटाशस्त्राशस्त्रिविहारसंभृतरणास्वादे वादे मुक्तिसौध विशिखासोपानपंक्तिविराजमानवैशम्पायनशौनकप्रभृतिभिः सशिरस्कंपमभिनन्दनीयानांविजातीयानास्वाद्यसिद्धीस्तन्यस दृक्तसदर्थनिकुरम्बकरम्बितानां सत्संप्रदायसंवन्धबन्धुराणां प्रव न्धानां प्रणयनेनच निरासनीया इत्येषैव प्रतिकूलनिरासपद्ध तिराचार्य्यवर्य्यचरणसञ्चरणसंचुरणेत्यषडक्षीणन्नैतत् । एता दृशपरमतनिरासश्चबहुमुखं स्वसिद्धान्तप्रकाशायसम्पनीपद्यत इत्याचार्य्यैरादृियते, तत्र ' गुरुं हुंकृत्य तुंकृत्य विप्रं निर्जित्य वादतः । स्मशाने जायते वृक्षः कंकगृध्रोपसेवितः' इतिवचनेन ब्राह्मणानां परमतस्थानां वादेन विजयस्यानिष्टसाधनत्वागमा त्तेषाञ्च बहुज्ञानां 'पापिष्ठा वादवर्य्येण मोहयन्त्यविचक्षणान्' इत्युक्तरीत्याकुतर्कनिवहैर्जगद्व्यामोहमातन्वानानांदुर्जयत्वाच्च कथमिवजयः शक्यआशंसितुमिति शंकां श्रीलक्ष्मणेन्द्रजिद्वि जयप्रस्तावापदेशेनपरिहरन्ति । तत्र 'नविगृह्य कथां कुर्या दिति निषेधे सत्यपि 'यथाशक्ति निगृहणीद्दे्वतागुरुनिन्दका निति प्रतिप्रसवदर्शनेनगुरुंहुंकृत्येत्यस्यदेवतागुरुनिन्दकव्यतिरिक्त

विषयतया व्यवस्थापनेनैतेषां कुदृष्टीनां जयेन न कोऽपिदोषः प्रसज्यत इति, प्रमाणपरतन्त्राः प्रतियन्ति,तेषां निरासस्यसुसाधं कञ्चिदुपायंप्रकाशयन्ति शरादूभ्रातुरित्यादिना । तत्र हनूमद्बन्धनसमर्थब्रह्मास्त्रलब्धसत्वं त्रिलोकनाथमहेन्द्रजयेनान्वर्थितेन्द्रजिन्नामानं समरेषु दुर्जयंमेघनादं भगवाञ्छ्रीसौमित्रि 'धर्मात्मासत्यसन्धश्च रामो दाशरथिर्यदि ॥ पौरुषेचाप्रतिद्वन्द्वःशरैनं जहि रावणिम्' इत्युक्तरीत्या भगवतो लोकोत्तरंवीर्यं स्मृत्वा तेनशपथं विधायऽतदेकान्तमना भगवत्करुणापरिवृंहितप्रभाव एकेनैव शरेण नामशेषता मनैषीत् । तद्वत्तत्तन्मतस्थापन हेवाकप्रथमानहैतुककथाकल्लोलकोलाहलमुखरितदिगन्तराला दुर्जया विमतस्था लक्ष्मीनाथसमारम्भमहाचार्यपंक्त्यनुसन्धानपरै र्नाथजुष्टश्रुतियुवतिशिरोभूषणायमानभाषणै,र्विष्वग्वैघव्यघट्टोत्मथनपटुधीभि रुपनिषदगदंकारवाग्भिः प्रवाग्भिः परमैकान्तिभिः सुनिरसा इति गुरुपरम्परानुसन्धानमुपायतया व्यज्यते । जितेन्द्र' ब्रह्मास्त्रोर्जित मित्यनेन बहुविधदुर्निवार कुतर्कनिवहनिबिडितमतास्थायुक्तया दुर्जयता दन्ध्वन्यते । अर्घामत्यनेन 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' इति सूत्रोक्तन्यायेनाघपरिपूर्णत्वप्रतीत्या, "पापिष्ठा वादवर्षेण मोहयन्त्यविचक्षणा" निति वचनोक्तं पापिष्ठत्व मनुस्मार्य्यते, भ्रातुर्वीर्य्यंस्मरण निशितादित्यनेन परमाचार्य्यभगवत्प्रवर्तिताचार्य्यवंशानुसन्धानमुपायतया व्यज्यते । प्रमथ्नन्तं सेनांरवि

तनुजनाथा मित्यनेनाश्रुतत्रय्यन्त सिद्धान्तानां निरपराधानां दैवप्रकृतीना मविचक्षणानां वादवर्षेण व्यामोहकानांविमत स्थाना माम्नायचर्चाकवचधृतिकनद्गोमुखद्वीपिनां चावश्यनि राकरणीयता ध्वन्यते । तदेवंक्षुद्रक्षोभार्हतकौदितकुहककथाव णीदुर्नाटकप्रवर्तकानांदुर्जयानामपिविमतस्थानामाचार्य्यकृपया लीलयैवनिरासः सुशक इति प्रत्यपादीतिसिद्धम् ॥

( भाषार्थ ) श्रीरामचन्द्रजी के पराक्रमके स्मरणसे तीक्ष्ण किये गए शरसे ( कई वार संग्राममें जब मेघनाद जीता ही रह गया तब श्री लक्ष्मणजीने यह प्रतिज्ञा की यदि श्री रामचन्द्रजी धर्मात्मा हैं सत्य भाषण करने वाले हैं पराक्रम में अद्वितीय हैं तो यह मेरा बाण इस इन्द्रजित् मेघनाद का नाश करे ऐसा कह कर एकही बाणसे मेघनादको यमपुर का अतिथि बना दिया ) पापी ( ब्यर्थही कन्दमूल फल खाने वाले मुनियों को कष्ट देने वाला ) इन्द्र को भी जीतने वाला ब्रह्मास्त्रसे बढ़ा है पराक्रम जिसका सुग्रीव है अधिपति जिसके ऐसी सेनाको पीड़ित करने वाले मेघनाद को विभीषणके लिए जिन्होंने मारा ऐसे श्रीलक्ष्मणजीके शरण में प्राप्त हैं।

सदासाधुत्राणप्रसितमतिनादाशरथिना,
विनिक्षिप्तांगुर्वीं सकलजनतापालनधुराम् ।
प्रजानांवा राज्ञोरुचिमभिलषन् सन्निरवहत्,
प्रपद्येश्रीमन्तं,कृपणशरणं लक्ष्मणमुनिम् ॥१३॥

(अन्वयः) सदासाधुत्राणप्रसितमतिना दाशरथिना विनिहि-
ताँ गुर्वीं सकलजनतापालनधुरां प्रजानां राज्ञः,वा रुचिम्,
अभिलषन् सन् (यः) निरवहत् तं श्रीलक्ष्मणमुनिम् प्रपद्ये।
( व्याख्या ) सदा सर्वदा साधुत्राणे साधुसंरक्षणेप्रसितात
त्वरा मतिर्बुद्धिर्यस्यतेन, दाशरथिना श्रीरामचन्द्रेण, विनि
हितांनिहिताम्, गुर्वीं महतीम्,सकला सम्पूर्णा या जनता जनस-
मूह स्तस्याः पालनस्य संरक्षणस्य धूर्भारस्तान्तथोक्ताम्, प्रजानाँ
जनानाम्,राज्ञोऽवनिपस्य,वा,रुचिमभिप्रायम्,अभिलषन्कामय
मानः सन्यःश्रीलक्ष्मणः, निरवहत्सम्पादयामासतंश्रीलक्ष्मण
मुनिं प्रपद्ये, यद्यपि, नरपतिहितकर्ता द्वेष्यतांयातिलोके जनपद
हित कर्ता त्यज्यते पार्थिवेन्द्रैः॥ इति महति विरोधेवर्तमाने
समाने नृपतिजनपदानां दुर्लभः कार्य्यकर्त्तेतिश्लोकोक्त
रीत्या प्रजानाँ राज्ञोवाऽनुकूलकार्य्यकर्तुरत्यन्ताभावोऽत्रप्र
सिद्ध एव, तथाप्ययं श्रीलक्ष्मण उभयोरपि मनो रञ्जक आ-
सीदित्यस्य लोकोत्तरं कार्य्यकर्तृत्वंध्वन्यते—

( तात्पर्य विवरणम् )

तदेवमुदासीनानां साधूनामुपदेशादिना भगवदाभिमुख्यं
विधेयमिति निरूपितम्। तत्राचार्य्यत्वेनावस्थाय यथावस्थित
तत्वप्रदर्शनेन तेषांपालन मपि "गुरुरसिगतिश्चासिजगताम्,
इत्युक्तरीत्या परमाचार्य्यस्य भगवतः कृपयैव सम्पन्नम्, तथा
तत्प्रीतये लोकानामुद्धरणार्थं च तत्प्रयोज्यकर्त्रा क्रियते इत्य

नुसन्धानपूर्वकं स्वार्थकर्तृत्वस्वार्थभोक्तृत्वस्वाधीनकर्तृत्वस्वा धीनभोक्तृत्वरूपतृणाच्छन्नकूपनिपात मन्तरा सावधानैः कर्तव्य मिति भगवद्दत्त राज्यनिर्वाहकस्य तत्प्रसादैकफलस्य श्रीलक्ष्मण स्य वृत्तान्तेन प्रतिपाद्यते सदासाधुत्राणे त्यादिना पद्येन, तत्र पूर्वार्द्धेन सकलसाधुजनसंरक्षणार्थमेव विष्वक्सेनपराङ्कुशप्रभृ तिभक्ताग्रेसरैरुपदेशद्वारेणभगवता श्रीसंप्रदायस्य-वर्तना दासुरप्रकृतिसंमोहनार्थप्रवर्तितबौद्धमतसादृश्यसंभावनायाःसुदू रापोढत्वा त्तन्मतप्रवर्तनंस्वस्यापि न दोषमाकर्षयति, यावता परहितनिरतपरमपुरुषप्रवर्तितसत्संप्रदायाभिवर्द्धनात्तस्यनिरु स्सादप्रसादप्राग्भारमेवसंपादयेदिति व्यज्यते । सकलजनता पालनधुरामित्यनेन 'पशुर्मनुष्यः पक्षी वा येच वैष्णवसंश्रयाः, तेनैवते प्रयास्यन्ति तद्विष्णोः परमंपदम्' इत्युक्तरीत्या श्रीसं प्रदाय एव सर्वाधिकारप्रपत्तिनिर्धारणं कृतमितिव्यज्यते । प्रजा नाँ वा राज्ञो रुचि मभिलषन्सन्निरवहदित्यनेन, आम्राश्च सिक्ताः पितरश्च प्रीणिता भवन्तीति न्यायेनैतादृशाचार्यक करणेनान्तेवासिनां दुर्ग्रहतत्वविज्ञानेन तादात्विकप्रीत्युत्पत्तिक्र मेण भक्तिप्रपत्त्यन्यतरभगवद्वशीकरणावलम्बनेन निःसीमब्र ह्मतत्वानुभवमहानन्दरूपायाः मुक्तेः सिद्धि भगवतः प्रसाद श्च जायत इति सर्वफलसंपत्या'क्लेशः फलेनहि पुनर्नवतां विधत्त' इतिरीत्या संकीर्त्यत इति सिद्धम् ॥ १३ ॥

( भाषार्थ ) सर्वदा साधुओंके रक्षामे तत्पर श्री रामचन्द्रजी

से दिये हुए सम्पूर्ण जनताके पालन रूप महान्भारको राजा और प्रजाके अनुकूल जिन्होंने सम्पन्न किया ऐसे श्री लक्ष्मण जी के शरण मे प्राप्त हैं--

इतःपरंपञ्चभिःश्लोकै र्बलभद्ररूपेणावतीर्णस्य श्रीलक्ष्मणस्य श्रीमद्भागवतान्तर्हितं यशोवर्णयति--

वयस्यानां लीलासहनदहनव्याकुलहृदः--
प्रलम्बादीन्हत्वा द्विविदखरदुर्मुष्टिकशलान् ।
सुहृत्क्रीडादानाद्धृत ललितरामाह्वयगुणं--
प्रपद्येश्रीमन्तं कृपणशरणं लक्ष्मणमुनिम् ॥१४॥

( अन्वयः ) वयस्यानाम्, लीलाऽसहनदहनव्याकुलहृदः, प्रलम्बादीन्, द्विविदखरदुर्मुष्टिकशलान्,हत्वा, ( ततः ) सुहृत्क्रीडा दानात्, धृतललितरामाह्वयगुणम्, श्रीलक्ष्मणमुनिं प्रपद्ये, ( व्याख्या ) वयस्यानाँ सवयसाम्, ( वयस्यःस्निग्धः सवया इत्यमरः ) लीलाक्रीडातस्या असहनममर्षणंतदेव दहनोवन्हिः तेनव्याकुलमुद्विग्नं हृदयंस्वान्तंयेषाँ तान्तथोक्तान् ( पद्दन्नोमास इतिहृदयस्यहृदादेशः )( चित्तंतुचेतोहृदयं स्वान्तं हृन्मानसंमनइत्यमरः ) प्रलम्बस्तन्नामकोदैत्य आदिर्येषाँ तान् द्विविदश्च खरश्चदुर्मुष्टिकश्च शलश्चतेतान्, एतन्नामकदैत्यान्, हत्वाविनाश्य, सुहृदाँमित्राणाँ क्रीडाविलासः तस्या दानात्वितरणात्, धृतोगृहीतोललितोमनोहरो रामस्याह्वय आख्यागुणश्चयेनतम्, ( सुहृदोरमयन् गुणैरितिभागवतोक्तेः)

( रामेतिलोकरमणाद्दलं बलवदुच्छ्रयादित्याद्युक्तेश्च ) एवंभूतं श्रीलक्ष्मणमुनिं प्रपद्ये इतिपूर्ववत्

(टी.)तदेवं लक्ष्मणावतारचरितं तेनप्रपन्नानाँ शास्त्रार्थव्यञ्जनञ्च प्रतिपाद्येदानीं बलभद्रावतारं प्रस्तुवन्ति । तत्र "परित्राणाय साधूनाँविनाशायच दुष्कृताम् ॥ धर्मसंस्थापनार्थाय संभवामि युगे युगे" इत्युक्तरीत्यावतारफलानां कथनेनावतारसाफल्यंतथा रामशब्दस्यान्वर्थताञ्च प्रथमंद्रढयन्ति वयस्यानामित्यादिना । तत्र पूर्वार्द्धेन दुष्कृद्विनाशनं कथ्यते । वयस्यानां लीलाया अमर्षणेनतेषा मकारणवैरित्वं ध्वन्यते । उत्तरपादेन "सुहृदो रमयन्गुणै"रित्युक्तरीत्या सुहृदाँसाधूना मानन्दप्रदाना त्साधुपरित्राणंनाम्नो याथार्थ्यञ्चव्यज्यते । साधुपरित्राणदुष्कृद्विनाशाभ्यां नान्तरीयकं धर्मसंस्थापनमप्युपलक्षितं भवति, अत्र तत्तदसुराणां विनाशनवृत्तान्तो भागवतमहोदधि साँयात्रिकैः स्वयमेव बिभावनीयइति विस्तरभयान्नलिख्यते ॥१४॥

(भाषार्थ)समान अवस्थावालोंके खेलकी असहिष्णुता रूप अग्नि से व्याकुल हृदय वाले द्विविदखर दुमुष्टिक शलऔर प्रलम्बादिकोंको मारकर मित्रोंके खेलका दान देकर राम ( लोक को प्रसन्न करने वाली ) इस सुन्दर पदवी तथागुणको जिन्होंने धारणकियाहै उन श्रीलक्ष्मणजीके शरणमे प्राप्तहैं—

प्रथमोऽनन्तरूपश्च इत्यादि वाक्योंसे बलभद्रजी का अवतार लक्ष्मणजी का ही था—

विचिन्वन्तींश्रेष्ठंदयित मवशिष्टंप्रलयतः—
ककुद्मीस्वांपुत्रीं शुचिजलजजन्मानुमतितः।
समर्प्यैवंयस्मै स्वयमपि चिरायुष्ट्वमजयत्—
प्रपद्येश्रीमन्तं कृपणशरणं लक्ष्मणमुनिम् ॥१५॥

( अन्वयः ) ककुद्मी,प्रलयतः, अवशिष्टंश्रेष्ठं दयितंविचि-न्वन्तीं स्वांपुत्रीं शुचिजलजजन्मानुमतितः, यस्मै ( बलरामाय ) एवंसमर्प्य स्वयमपिचिरायुष्ट्वम्, अजयत्, तं श्रीलक्ष्मण मुनिं प्रपद्ये—

( व्याख्या ) ककुद्मीककुद्मिनामाऽवनिपः, प्रलयतः सर्वसंहार-कालात्, अवशिष्टमुर्वरितम्, श्रेष्ठमतिशोभनम्, ( श्रेयान्श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभन इतिकोषः ) दयितंवल्लभम्, ( दयितंवल्लभंप्रियमित्यमरः ) बिचिन्वन्तीमन्वेषयन्तीम्, स्वाँनिजाम्, पुत्रींतनयाम्, शुचिपवित्रंयज्जलजं कमलं तस्माज्जन्मोत्पत्तिर्यस्यविधेः तस्यानुमतितआदेशात्, यस्मैव-लरामाय, एवंसमर्प्यदत्वा, स्वयमपिस्वतः, ( ककुद्मिभूपोऽपि,) चिरायुष्ट्वं दीर्घजीवित्वम् अजयत्जितवान्, तं श्रीलक्ष्मण मुनिं प्रपद्ये—

( तात्पर्य विवरणम् )

तदेव मवतारसाफल्यं रामशब्दस्यान्वर्थताञ्च प्रतिपाद्य दानीं "पत्रंपुष्पंफलंतोयं योमेभक्त्याप्रयच्छति ॥ तदहंभक्त्युपहृत मश्नामिप्रयतात्मनः" इत्युक्तरीत्या साधारणपदार्थानां भक्त्या

भगवतेसमर्पणेऽपितत्प्रसन्नेन भगवता जन्मजरामरणादिवि-
मुक्तिः क्रियतइतीममर्थं ककुद्मिपुत्रीप्रदानवृत्तान्तेन व्यञ्जयन्ति
"विचिन्वन्ती मित्यादिना"। तत्र पूर्वार्द्धेन स्वपुत्र्याअनुरूप
दयितान्वेषणपूर्वकं बलभद्रएवानुरूप इति निर्णयस्य कथनेन
नानाविधासु देवतासु भगवान्नारायण एव स्वाधीनाशेषसत्ता
स्थितियतनफलतया निरुपाधिकस्वामित्वेनच परदेवतेति
परदेवतापारमार्थ्यज्ञानं व्यञ्जितम्। शुचिजलजजन्मानुमतित
इत्यनेनायोनिजत्वेन निर्दोषेण परमेष्ठिनादत्तानुमतेः कथना-
त्सर्वेष्वपि भगवत्कैंकर्य्येषु स्वार्थकर्तृत्वादिदोषदविष्ठभाग-
वतानुमतिरावश्यिकेति व्यज्यते। तृतीयपादेन फलनिर्देशः
क्रियते। तत्रामृतत्वरूपचिरायुष्ट्वकथनेन तमेवंविद्वानमृत
इहभवतीत्यवयवार्थं पौष्कल्योपेतमुक्तिः परमात्मार्चनफल
मिति व्यज्यते—

( भाषार्थ ) प्रलयमे भी नष्ट न होने वाले श्रेष्ठ पति का
अन्वेषण करने वाली जो अपनी कन्याहै उसको ( ककुद्मि-
नामक राजा ) ब्रह्मा की आज्ञा से जिन बलभद्रजी को देकर
ककुद्मी भी दीर्घ जीवित्व को प्राप्त हुआ ऐसे श्रीलक्ष्मणजी
के शरण मे प्राप्त हैं—

( भावार्थ ) ककुद्मीकी कन्या रेवती ऐसा वर चाहती थी जो
प्रलय मे भी नष्ट न हो अतः ककुद्मी उसको लेकर सम्मति
लेनेके लिए ब्रह्मा के समीप गये उस समय वहाँ नृत्य गीत

हो रहा था इससे अनुचित समझकर राजाने सभा विसर्जन होने पर ब्रह्मासे निवेदन किया उन्होंने कहा इस समय अवनि मण्डल में तुम्हारे सामने के राजा नही हैं क्योंकि इतनी देर में तो वहाँ कई युग ब्यतीत हो गए इस समय तुम्हारे मनके अनुकूल वर बलभद्रजी हैं उनसे विवाह करो

( संकर्षणशब्दार्थमाह )

हितोक्तिंनाशृण्वन् पुरुनृपतयो गर्वमतयो,
विधित्सन्नन्वर्थं बुधसदसिसंकर्षणपदम् ।
कुरूणां वृष्णीनां प्रणयमकरोद्धास्तिनपुरे,
प्रपद्येश्रीमन्तं, कृपणशरणं लक्ष्मणमुनिम्॥१६॥

( अन्वयः ) गर्वमतयःपुरुनृपतयः, ( यदा ) हितोक्तिं न, अशृण्वन्, ( तदा ) बुधसदसि, संकर्षणपदम् अन्वर्थं विधित्सन्, ( यः ) हास्तिनपुरे, कुरूणां वृष्णीनाम्, प्रणयम्, अकरोत्, ( तं ) श्रीलक्ष्मणमुनिम् प्रपद्ये–

( ब्याख्या ) गर्वेमतिर्येषाँ ते गर्वमतयोऽहंकारबुद्धयः, पुरुनृपतयः पुरुवन्शीयराजानोऽखिलराजाश्च,यदा यस्मिन्काले, हितोक्ति मनुकूलवाक्यम्, नाशृण्वन्नाकर्णयन्,तदा बुधसदसि विद्वत्समितौ,संकर्षणपदं संकर्षणेतिनाम, अन्वर्थं सम्यक्कर्षति नगरंभक्तचेतान्सिचेतिव्युत्पत्तिलभ्यार्थम्, विधित्सन्विधातुमिच्छन्, विपूर्वकात्सन्नन्तादडुधाञ्धातोःशतृप्रत्ययः, ( यः श्रीलक्ष्मणः ) हास्तिनपुरे दुर्योधनराजधान्याम्, कुरूणाँ

कुरुवंशिनाम्, वृष्णीनाँवृष्णिकुलोद्भवानाम्,प्रणायऽम, ( प्र णायास्त्वमीविश्रम्भयाञ्चापू माया इतिकोषः ) अकरोत्कृतवा न्, तं श्री लक्ष्मणमुनिं प्रपद्ये-

( तात्पर्यं विवरणम् )

तदेवंककुद्मिवृत्तान्तेनभगवत्कैङ्कर्यस्य मुक्तिफलकर्ताँ प्रति पाद्यकथानुक्रमेण स्रोतस्विन्याँ दुर्योधन राजधान्या आकर्षणे नतेनभयोत्पादनपूर्वकंतेषाँचित्ताकर्षणेनतेन सम्बन्धस्थेमा कर्षणेन सङ्कर्षणनाम्नोऽपियथार्थतां प्रथयन्तस्तेनच हठादपि परमपुरुषार्थकाष्ठाभूतभागवतसम्बन्धापादनावश्यकताँव्य ञ्जयन्तोनिबध्नन्तिहितोक्तिमिति । प्रथमपादेन सामोपाय प्रयोगस्तद्वैतत्थ्यंच कथ्यते, तेन भागवतसम्बन्धापादनमपि साम्नैवविधेयम् । तद्वैतत्थ्ये सत्येवोपायान्तरपरिग्रहोयुक्त इति व्यज्यते । हितोक्ति मित्यनेनास्या हितोक्तेरनादरेभाव्य नर्थावश्यं भाविता व्यज्यते, गर्वमतयः इत्यनेनपित्तोपहतस्य क्षीर मिवस्वदोषादेव तेषामहृद्यमासीत् नतूपदेशे तत्कर्त्तरिवा विन्दुमात्रोऽपिदोष इति व्यज्यते, द्वितीय पादेन विह्वलभायाँ सर्वविद्वदभिनन्दनीयरीत्या योगार्थानुष्ठानेन नाम्नोऽन्वर्थं ताकरणस्यायमेवावसर इति प्राप्तकालता व्यज्यते, तृतीय पादेन श्रीकृष्णसम्बन्धेन लब्धभागवतत्व काष्ठैर्वृष्णिभि स्सह प्रणय सम्पादनेन भागवतसम्बन्धोविधेय इति ध्वन्यते

( भाषार्थ ) अहंकारी पुरुवंशी महाराजाओं ने जब बलभ

द्रके हित वाक्योंको नही सुना तब विद्वानोंके सभामें अपने नाम को ( सम्यक् कर्षतीति संकर्षणः इस व्युत्पत्ति लभ्य संकर्षण शब्दके अर्थ को ) यथार्थ करने की अभिलाषासे जिन्होंने हस्तिनापुर में कुरु वंशिओं और वृष्णिओंका मेल किया ऐसे लक्ष्मणजीके शरण मे प्राप्त हैं।

( भावार्थ ) दुर्योधनकी पुत्री लक्ष्मणाके स्वयम्बरमे श्रीकृष्ण जीके पुत्र साम्बभी गए थे, जब लक्ष्मणा जयमाला लेकर स्वयम्बरमे आई तब साम्ब उसको रथपर चढ़ाकर अपने नगरकी ओर चल दिए इस पर स्वयम्बरस्थ राजाओंने अप ना अपमान समझ कर उनको पकड़कर कारागृहमे डाल दिया, जब यह समाचार द्वारिका पहुंचा तब बलभद्रजी क्रोध युक्त आती हुई अपनी सेनाको रोक कर अकेले आए और पुरुबंशी राजाओंसे साम्बको छोड़नेके लिए कहा। किन्तु उत्तर मे उनसे अपमान १ सूचक बचन सुन कर बहुत क्रोधित हुए, और हलसे हस्तिनापुरको गङ्गामे डुबा देना चाहा तब भय भीत पुरुबंशियोंके प्रार्थना करने पर तथा लक्ष्मणा सहित साम्बको देदेने पर मेल कर लिया।

यदाधर्ममूढानसुखमबुधन् भारतभटाः,
सुमर्तुं सन्नद्धाः कुटिलकलिदुर्य्योधनवशात्।
प्रियद्रोहाद्भीरुस्सहजकरुण स्तीर्थमचरत्,

१ टिप्पणी आरु रुहत्युपानद्वैशिरो मुकुट भूषितम्—इत्यादि

प्रपद्ये श्रीमन्तं कृपणशरणं लक्ष्मणमुनिम् ॥ १७॥

( अन्वयः ) कुटिलकलिदुर्य्योधनवशात् मूढाः सुमर्तुं सन्नद्धाः भारतभटाः, यदा धर्मे सुखं न अबुधन्, तदा सहजकरुणः प्रियद्रोहात् भीरुः, ( यः ) तीर्थं अचरत्, तं श्रीलक्ष्मणमुनिम् प्रपद्ये—

( व्याख्या ) कुटिलोवक्रः कलिः पापरूपो यो दुर्योधनस्तस्य वशादाधीन्यात्, मूढाअज्ञाः, ( अज्ञे मूढयथाजातमूर्खवैधेयवालिशा इति कोषः ) सुमर्तुं पञ्चत्वंप्राप्तुम् सन्नद्धा स्तत्पराः, भारतभटाः भारतयोद्धारः यदा यस्मिन्काले, धर्मे सुकृतेयुधिष्ठिरेच, सुखमानन्दम् नाबुधन्नाजानन्, तदा तस्मिन्काले, सहजा स्वाभाविकी करुणा कृपायस्य सः, प्रियेभ्योद्रोहस्तस्मात् प्रियद्रोहात् सुहृद्विरोधात् भीरु र्भयशीलः, यः श्रीलक्ष्मणः, तीर्थं पुण्यक्षेत्रम्, अचरदभ्रमत्, तं श्रीलक्ष्मणमुनिम् प्रपद्ये—

( तात्पर्य विवरणम् )

तदेवंसङ्कर्षणपदस्यान्वर्थतां तेन भागवतसम्बन्धस्य भगवत् सम्बन्धस्य चावश्यकार्य्यतां प्रतिपाद्यैवमनवरतमुपदेशे क्रियमाणेऽपिमोहमाहात्म्यादबुध्यमानानांमात्मद्रुहां बिषयेपि द्रोहं विहाय "आत्मद्रुह ममर्यादं मूढमुज्झितसत् पथम्, सुतरा मनुकम्पेत नरकार्चिष्मदिन्धनम्" इत्युक्तरीत्या नुकम्प्यतामसकृत्सन्धि विधित्सायामप्यसन्दधानानां मरणे

व्यवसितानां मात्मद्रुहां कौरवाणाँ विषये करुणां विधाय वलभद्रस्य तीर्थयात्राकरणवृत्तान्तेन व्यञ्जयन्ति यदा धर्मे इत्यादिना श्लोकेन, तत्र पूर्वार्धेनमहापापिष्ठदुर्योधननिर्वन्धेनसन्धिवार्तामनाकर्ण्य भटानां मरणे व्यवसायस्य धर्मे पुत्रे सुख हेतुतानवबोधस्यच कथनेन पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः, नष्टप्रज्ञः पापमेव पुनरारभते नरः इत्युक्तरीत्यास्वपापमाहात्म्यात्समीचीनोपदेशमनाकर्ण्य मन्दानन्दसन्दोहरूपमुक्ति मप्यनादृत्य जराम्मरणादि सन्तत संसार प्रवणता श्रीसिद्धान्तस्य परम सुख साधनता नववोधश्च व्यज्यते । तृतीय पादेन प्रियद्रोहं विहाय सहज कारुण्येन तीर्थयात्राचरणस्यवर्णनेन श्रीलक्ष्मणस्य निरुपाधिककारुण्यं परद्रोह गन्धशून्यत्वंच व्यज्यते तेन तादृश पापिष्ठात्मद्रोहिविषये सुतरामनुकम्पेतेति बचनानुसारे णानुकम्पावश्यकार्य्येति ध्वन्यते ।

( भाषार्थ ) दुष्ट कलि रूपी दुर्योधनके वश होनेसे जब मरने को उद्यत मूर्ख भारत भटोंने धर्ममे ( युधिष्ठिर और धर्माचरण ) कल्याण नहीं समझा तब बन्धुओंका आपस मे विरोध न देख सकने वाले परम कारुणिक जो बलभद्रजी तीर्थोंमे पर्य्यटन करने के लिये चले गए ऐसे श्री लक्ष्मण जीके शरण मे प्राप्त हैं ।

धनात् प्रायोऽनर्थोभवति विदुषामित्युपदिशन्,
उदासीनोऽयासीज्जनक मनुसत्राजितमणेः ।
गदायुद्धंस्वाध्यापयत धृतराष्ट्रात्मजमिह,
प्रपद्ये श्रीमन्तं कृपणशरणं लक्ष्मणमुनिम् ।१८।

( अन्वयः ) विदुषामपि प्रायः, धनात् अनर्थोभवति, इति, उपदिशन्, सत्राजितमणेः, उदासीनः, जनकम्, अनु, अयासीत्; ( यः ) इह, धृतराष्ट्रात्मजं गदायुद्धं स्वाध्यापयत, तं श्री लक्ष्मणमुनिम् प्रपद्ये--

( व्याख्या ) विदुषाँ सुधियामपि, प्रायोबहुधा, धनाद्वित्तात् अनर्थोऽशुभम्, भवति जायते, इति पूर्वोक्तम्, उपदिशन् शिक्षयन्, सत्राजितस्य एतन्नामक नृपते र्मणेः सूर्य्यात्लब्ध रत्न विशेषस्तस्मादुदासीन स्तटस्थः जनकं तन्नामक नृपतिम्,अनुप्रति, अयासीदगमत् ( यः श्रीलक्ष्मणः ) इह जनक पुरे धृतराष्ट्रात्मजं दुर्योधनम्, गदायुद्धं गदासमरम्, स्वाध्यापयत अपीपठत, तं श्रीलक्ष्मणमुनिम् प्रपद्ये--

( तात्पर्य विवरणम् )

तदेवं सर्वेष्वपि करुणावश्य कार्येति प्रख्याप्येदानीं सर्वेषामपि दोषाणा मर्थ आवरणय निवन्धनत्वात् तत्र वैराग्यं सत्राजितमणौ बलभद्रस्यानादरप्रदर्शनेनोपदिशन्तस्तत्कथानुसारेण तन्मणिप्रावरण्येन कृष्णस्य दोषास्पदता प्रथाञ्चज्ञ्य अयन्तो दुर्योधनस्य गदायुद्धशिक्षणेन धनुर्वेदाध्यापकत्वमपि

प्रति पादयन्ति धनादित्यादिना पद्येन। पूर्वार्धेन "बलवानि न्द्रियग्रामोविद्वांसमपि कर्षति" इत्युक्तानुसारेणवासनाबलात् धनलिप्सासम्भवस्य प्रदर्शनेन सावधानै र्महता प्रयासेनापि तादृशदोषस्यनिराकरणीयता ध्वन्यते। तृतीय पादेन धनु र्वेद शिक्षणं प्रतिपाद्यते धृतराष्ट्रात्मज मित्यनेन शिष्यस्यसत् कुलीनता ध्वन्यते ।

( भाषार्थ ) धनसे विद्वानों को भी प्रायः अनर्थ हुआ करता है इसका उपदेश करते हुए सत्राजितके मणिसे उदासीन हो जनक पुर जाकर जिन्होंने दुर्योधनको गदायुद्धका अध्ययन कराया ऐसे श्रीलक्ष्मणजीके शरणमें प्राप्त हैं ।

( भावार्थ ) सत्राजित नामक एक यादवने सूर्यके प्रसन्नार्थ महती तपस्या की,सूर्यने प्रसन्न होकर उसे स्यमन्तक मणि दिया,एक दिन वह उस मणिको लेकर उग्रसेन की सभामें गया, श्री कृष्णने उस मणिको राजा के योग्य समझ कर उससे मांगा किन्तु उस मणिको न देकर वह घर लौट आ या, एक दिन सत्राजितका भाई प्रसेन उस मणिको लेकर शिकार खेलने गया वहां एकान्त में सिंहने मार डाला और मणि जाम्ववन्तके हांथ लगी। भाईके मरनेका समाचार सुन कर सत्राजितने भाईके मरने तथा मणिके अपहरण करनेका दोष श्रीकृष्ण चन्द्रजीके शिर मढा, कलङ्क लगनेका समाचार सुनकर श्रीकृष्णचन्द्रजी उस मणि को खोजनेके लिये बन

गए, वहाँ लड़ाईमें जाम्बवन्तको हरा कर उसकी कन्या जाम्बवती समेत मणिको लाए और सत्राजितको देकर सबहाल कह सुनाया, पश्चात् प्रसन्न होकर सत्राजितने वह मणि और अपनी कन्या श्रीकृष्णको समर्पित किया श्रीकृष्णचन्द्र जीने कन्याको ग्रहण कर मणिको अस्वीकार किया, परन्तु सत्राजितने उस कन्याको शतधन्वा को देने कहा था इस लिये शतधन्वा क्रोधित होकर सत्राजितको मार कर मणि उठा ले गया, इस समाचारको श्रीकृष्णचन्द्रजीने सुना और उसके मारनेका विचार किया, इस बातको सुन कर सत्राजित अक्रूर के समीप मणि छोड़कर भागा, श्री कृष्ण और बलराम ने उसका पीछा किया सौ योजन जाने पर वह श्रीकृष्ण द्वारा मारा गया किन्तु मणि नमिली, मार कर लौटने पर सब समाचार ( वृथाहतः शतधनुर्मणिस्तत्रनविद्यते ) शतधन्वा वृथा ही मारा गया उसके समीप मणि नहीं है बलदेव जीको सुनाया इससे उनके मनमें शंका हुई कि यह हमसे छिपा रहे हैं इस कारण वे जनकपुर चले गए और वहीं दुर्योधन को गदा युद्ध सिखाया,

( इतः परं श्रीसिद्धान्तंदृढ़यति )

दुराशाहिग्रस्तासुरनृपशुदुर्वादजनितं,
वहिष्कार्य्यैर्वेदात् पतितकुमनीषै रुपचितम् ।
सरस्वत्या हार्दं ज्वरमशमयत् सूक्तिसुधया,

प्रपद्येश्रीमन्तंकृपणशरणं लक्ष्मणमुनिम् ॥१६॥

( अन्वयः ) दुराशाग्राहिग्रस्तासुरनृपशुदुर्वादजनितं वेदात्बहिष्कार्यैः पतितकुमनीषैरुपचितं सरस्वत्याः हार्दं ज्वरम् (यः) सूक्तिसुधया, प्रशमयत् तं श्रीलक्ष्मणमुनिम् प्रपद्ये-

( व्याख्या ) दुराशा दुराग्रह एवाहिःसर्पस्तेन ग्रस्तागृहीता येऽसुरा नृपशवश्च दनुजमनुजापसदा स्तेषां दुर्वादाः प्रकृष्ट कुतर्का स्तैर्जनित मुत्पादितम्, वेदात्श्रुतेर्बहिष्कार्यैः पृथक्करणीयैः ( श्रुतिःस्त्रीवेदआम्नायइति कोषः ) कुत्सिता मनीषायेषा न्ते कुमनीषाः पतिताश्चते कुमनीषाश्च तै स्तथोक्तै भ्रष्ट बुद्धिभिः, ( कुदृष्टिभिरित्यर्थः ) बुद्धिर्मनीषाधिषणेतिकोषः- द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैरितिज्ञापकात् पत्धातोःक्तप्रत्ययइडागमश्च-उपचितं समेधितम्,सरस्वत्या वाग्देवतायाः, हृदयास्यायं हार्दस्तंहार्दं मानसिकम्, स्वान्तं हृन्मानसंमनइत्यमरः , हार्दमित्यत्र तस्येद मित्यण्, हृदयस्य हृल्लेखयदण्लासेष्वितिहृदादेशः-ज्वरंजूर्तिम्, ( अथज्वरेजूर्तिरितिकोषः ) यः श्रीलक्ष्मणमुनिः,सुष्टूक्तिः सूक्तिस्सैव सुधात या सूक्तिसुधया सद्वचनपीयूषेण,प्रशमयच्छान्तिमनयत्, (त स्मैरामानुजायनमः परमयोगिने, यः श्रुतिस्मृतिसूत्राणाम न्तर्ज्वरमशीशमदित्यादिवचनादितिभावः ) तंश्रीलक्ष्मणमुनिम् प्रपद्ये, शम्धातोर्णिच्यमन्तत्वाद्ध्रस्वे लङिरूपम्बोध्यम्-

## ( तात्पर्य विवरणम् )

तदेवं प्रथमोऽनन्तरूपश्च द्वितीयोलक्ष्मणस्तथा । तृतीयोबलरामश्चकलौ रामानुजोमुनिः" इत्युक्तरीत्या नुक्रमेणादिशेष लक्ष्मणबलभद्राणामवतार कथाँ तैः कृतानामनन्यसुशकाना मुपकाराणां संग्रहञ्चदिङ्मात्रेण सूचयित्वेदानीं श्रीसिद्धान्ता चार्याणां भगवद्रामानुज पूज्य पादानां चरितं विस्तरेण प्रस्तोष्यन्तः परमतभङ्गञ्च तत्रतत्र व्यञ्जयन्तः प्रथमतो 'यावेद वाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हिताःस्मृताः" इतिभेषजायमानयत्किञ्चनोक्तेः मनोर्वचनानुसारेणाज्ञानिदानसमोगुणप्रसूतानां चार्वाक बौद्ध जैनप्रभृतिवेदवाह्य दर्शनानां तदनुसारि जैन बौद्ध गन्धि भेदाभेद वादि मृषा वादि कुदृष्टीनाञ्च सकल जगदुपप्लव प्रवृत्ततामुद्वीक्ष्य हार्द ज्वरास्कन्दितायाः सरस्वत्याः तस्मै रामानुजार्यायनमः परमयोगिने । यः श्रुतिस्मृति सूत्राणामन्तर्ज्वरमशीशमत्' इत्यनु सन्धान रीत्या भेदाभेद घटक श्रुत्यादीनाँ परस्पर बाध मन्तरा यथा वस्थि तार्थपरता बोधनेनान्तर्ज्वर मपाकृत्य 'प्रणामं लक्ष्मणमुनिः प्रतिगृह्णातु मामकं प्रसाधयति यत्सूक्तिः स्वाधीनपतिकां श्रुति'मित्युक्त रीत्या श्रुतेः श्रीमन्नारायण परताँ प्रति पाद्य श्रीमद्विशिष्टा द्वैत सिद्धान्त स्थापनेन भाष्य काराणा मवतार साफल्यंविव ध्नन्ति दुराशेत्यादिनापद्येन, तत्र प्रथम पादेन यथा वस्थित

सकल प्रमाणानुगुणमर्थमबुध्यमानैः दुराशावशं वदैराशुर प्रकृतिभि र्यथार्थज्ञान विरहेणपशु कल्पै वैभाषिक सौत्रान्तिक योगाचारमाध्यमिकाभिधानैः क्षणिकत्वज्ञानाकारानुमेयत्व बाह्यार्थ मिथ्यात्व सर्वशून्यत्व स्थापकै र्बौद्धै देहातिरिक्तात्म प्रत्यक्षातिरिक्त प्रमाण नास्तित्व,वादिभिर्लोकायत मतस्थैश्चार्वाकैरनेकान्त वादिभिर्देह समपरिमाणात्म वादिभिः परिहित गगनैः जैनैश्चकुतर्ककल्क कल्पितः सर्वार्थविप्लवः श्रुतिवैयाकुलीच यथार्थ प्रदर्शन प्रवृत्तायाःसरस्वत्याः ज्वर जनकत्वेन कथ्यते। एवं 'या वेद बाह्यास्मृतयः' इत्यभिहितानां बौद्ध बार्हस्पत्यार्हतागमानां स्वरूपं तेषां लोकव्यामोहन प्रकारञ्च निरूप्य,तदनुयायिनां प्रच्छन्नबौद्धानां प्रच्छन्न जैनानाञ्चवेदबहिष्कार्यत्वं पातित्यं कुदृष्टिताञ्चतत्प्रवर्तित वादैः ज्वरस्य समुद्दीपितताञ्च कथयन्तिबहिष्कार्यै रित्यादिना पादेन,कुमनीषै रित्यनेन कुदृष्टय इति प्रमाण बचनस्थंपदं स्मार्यते, बहिष्कार्यै र्वेदादित्यनेन प्रमाणबचनस्थवेदबाह्य शब्दस्योत्तरत्राप्यनुषङ्गःसूच्यते। अनुषङ्गाभावे' सर्वास्तानिष्फलाः प्रेत्यतमोनिष्ठाहिताःस्मृताः' इतिनैष्फल्य वर्णनं नसंजाघटीति, एतैरभिवर्धितस्य सरस्वतीहार्दज्वरस्यसूक्तिसुधासिद्धौषधेननिश्शेषनिवृत्तिः कथ्यते सरस्वत्याहार्दमित्यादिना। वेद बाह्य मतानां,कुदृष्टीनाञ्च जिज्ञासाधिकरण समन्वयाधिकरण तर्कपादादिषु विस्तरेणकृतो निरासः परिश्रम शालिभि

स्तत्रैव विभावनीय इतिन विस्तृणीमहे। यः श्रुति स्मृति सूत्राणामन्त ज्वरमशीशमत्" इति श्रीसूक्त्यनुसारेण श्रुति स्मृति सूत्राणामित्यनिर्दिश्य सरस्वत्या हार्दमिस्ति निर्दिशन्ता मयमाशयः यद्गुरुपरम्पराप्राप्तेयं कथानुसन्धेयेति। साचेयंक था लिख्यते, अथकदाचित् यादवप्रकाशस्य तैलाभ्यञ्जनं कुर्व ति श्रीभाष्यकारे तेनाभिहितं तस्य यथा कप्यासं पुण्डरीक मेवमक्षिणी, इत्यस्याः श्रुते र्मर्कटजघन सदृशे भगवतोऽक्षि णी इत्यर्थं निशम्य शोकेनाचार्या अश्रु विन्दूनत्यजन्, तेच विन्दवो वह्निकणा इव तदूर्वोः निपत्य महतीं वेदनामजनय न्तेन समुद्विग्नो यादवप्रकाश आचार्यानप्राक्षीत्, केनहेतु ना तवायंशोकः समुत्पन्नइति तच्छ्रुत्वाआचार्याः श्रुतेःभव द्भिरभिहितस्यासमीचीनार्थस्य श्रवणेन भृशंदूय इतिप्रत्यवा दिषुः, सच कोवान्यःसमीचीनार्थ इत्यनु युयुजे, आचार्याश्च कंजलंपिबतीतिकपिस्सूर्यः, तेन आस्यते विकास्यत यितिक प्यासंपुण्डरीकं रविकरविकाशितं पद्मं, कमुदकं प्यासः आसन मुत्रवोयस्येति कप्यासंगम्भीराम्भस्सम्भूतं कं जलंपिबतीति कपिः नालं तस्मिन्नास आसनं यस्येति कप्यासं सुमृष्टनाल स्थितं पद्ममिति व्युत्पत्ति त्रयंप्रदर्श्यगम्भीराम्भस्सम्भूत सुमृ ष्टनालरविकर विकाशित पुण्डरीकदलामलायते भगवतो ऽक्षिणीति प्रत्यब्रुवन्,एतदर्थत्रयंश्रुत्वा यादवप्रकाशोऽपिव्री डावनमित वदनोबभूव, पश्चात् गुरूणा ममीषां दिग्विजय

यात्रायां सरस्वती पीठेसरस्वती पुनरपीद मर्थत्रयं पृष्ट्वाकर्ण्यं सन्तुष्ट मानसा भवस्त्वयीति भगवद्बादरायण ब्रह्मसूत्रभाष्य ग्रन्थस्य सम्यग्ज्ञान हेतुतया श्री भाष्य मिति नाम भवत्विस्य भिधायान्तर्दधे इति

( भाषार्थ ) दुराग्रह रूपी सर्पसे ग्रसित राक्षस और नीच मानवोंके कुतर्क से उत्पन्न और वेदसे बहिष्कृत मानवोंसे पड़े हुए सरस्वतीके हार्दिक ज्वरको जिन्होंने अपने वागमृत से शान्त किया ऐसे श्री लक्ष्मणजीके शरण में प्राप्त हैं, प्रथमोऽनन्तरूपश्च इत्यादि वचनोंसे रामानुज स्वामीकाभी लक्ष्मणजी हीका अवतार था,

उपायान्कर्मादीन्धृतपवनचित्तै रसुलभान्,
जगन्मात्रप्राप्यंहरिचरणसेवं प्रपदनम् ।
समालोच्यस्वस्थापयत भुविरामानुजमतं,
प्रपद्ये श्रीमन्तं कृपणशरणं लक्ष्मणमुनिम् ॥ २० ॥

( अन्वयः ) धृतपवनचित्तैः असुलभान् कर्मादीन् उपायान् तथा जगन्मात्रप्राप्यं हरिचरणसेवम् प्रपदनम् समालोच्य, ( यः ) भुवि रामानुजमतम् स्वस्थापयत ( तम् ) श्री लक्ष्मणमुनिम् प्रपद्ये,

( व्याख्या ) धृतं स्वाधीनीकृतं पवनं चित्तं च यैस्ते तैः जित मनःप्राणैः ( योगिभिरित्यर्थः ) असुलभान् अलभ्यान्कर्मा दीन् कर्मयोगज्ञानयोगभक्तियोगान्, उपायान् साधनानि,

जगन्मात्रेणाप्राप्यम् विश्वमात्रलभ्यम्, हरिचरणयोः सेवायेनतत् भगवत्पादशुश्रूषणम्, प्रपदनम् प्रपत्तिम्, च समालोच्य विचार्य्य,(यः)लक्ष्मणमुनिः भुवि पृथिव्याम्, रामानुजस्यमतम् परमवैदिकसनातनश्रीसिद्धान्तम्, स्वस्थापयत सम्यक् स्थापितवान्, तम् श्रीलक्ष्मणमुनिं प्रपद्ये—

( तात्पर्य विवरणम् )

तदेवं निखिल कौतस्कुत कुमति मत निराकरण पूर्वकं सरस्वती सम्माननीय सन्मत प्रवर्त्तकत्वं संग्रहेण निरूपितम्,इदानीं सम्यक् तत्वहित पुरुषार्थान् पर्यालोच्य तत्प्रदर्शनेन सन्मत स्थापकत्वंप्रतिपाद्यते उपायानित्यादिना । तत्रशमदमादि सम्पन्नैःयमनियमादियोगाङ्ग निर्वाहनिपुणैर्निर्वहणीयैस्साक्षात्परम्परयावामोक्ष साधनैः कर्मयोगज्ञानयोग भक्तियोगादिभिरिदानींतनानां वैदुष्य सामर्थ्य विरहितानां कृपणानांफलासिद्धेः लघूपाया निर्धारणे केवलतत्वहित पुरुषार्थ निरूपणं न फलायकल्प्येतेति लघूपाय निर्धारणं प्रस्तुवन्ति उपायानित्यादिना । तत्रपूर्वार्धेनपरमयोगिभिरपिदुस्साधत्वकथनेनेतरेषां विषये कैमुतिकताद्योत्यते,धृतपवन चित्तैरित्यनेन निगृहीत प्राणत्वं निगृहीत मनस्त्वंचोच्यते, बाह्येन्द्रियाणाँमनोऽधीनप्रवृत्तितया तेषामपिनिग्रहो व्यज्यते । कर्मादीनित्यादि शब्देनज्ञानयोग भक्तियोगौपरभक्तिपरज्ञानपरमभक्तिरूपास्तत्पर्व विशेषाश्च गृह्यन्ते । उपायत्वस्य मोक्षनिरूपितत्वा

ङ्गीकारे कर्मज्ञान योगयोः "कर्मज्ञानाख्ययोगौ स्विहपरभजना धिक्रियाश्चौ स्वदृष्ट्येस्युक्तरीत्या साक्षान्मोक्षोपायत्वा सम्भवे ऽपि परम्परया साधनत्वस्य विवक्षितत्वान्नदोषः । यद्वाभक्तेर्मोक्षोपायत्वं कर्मज्ञानयोगयोर्भक्ति निरूपितो पायस्व मिति वैरूप्येणतत्तत्फलनिरूपितोपायत्वाङ्गीकारान्नदोषः । पूर्व योजनाया मुपायत्वस्य साक्षात्परम्परा साधारण्यम् । उत्तर योजनायां निरूपकभेद इति विशेषो विभावनीयः, द्वितीयपादेन "पुंभिस्सिद्धाधिकारैः क्रतवइधनिराकांक्षभावं भजन्त्यः प्रोक्तास्त्रैवर्णिकार्हाः श्रुति नयवशतो यद्यपि ब्रह्मविद्याः । अस्तेयाद्यैः प्रपत्त्या परिचरणमुखै रप्यधीतैः स्वजातेः सर्वेऽपि प्राप्नुयुस्तांपर गतिमितितु ब्राह्मगीतादिसिद्धम् ॥ 'अर्थित्वेन समर्थता त्रिकतनुस्समपिण्डिताधिक्रियासाचाष्टाङ्ग षडङ्ग योग नियता वस्था व्यवस्थापिता, श्रौतीसर्वशरण्यता भगवतः स्मृत्यापि सत्यापिता सत्यादिष्विवनैगमेष्वधिकृतिः सर्वास्पदे सत्पथे 'शक्ता शक्तादि तत्तत्पुरुष विषयतः स्थाप्यते तद्व्यवस्थे' त्युक्तरीत्यौपनिषदविद्यानां त्रैवर्णिकाधिकारत्वेऽपिअशक्त विषयतया व्यवस्थित विकल्पस्य सर्वाधिकारस्य मूत्रमन्त्र लब्धसत्ताकैः करण मन्त्र ( द्वयमन्त्र ) निर्वहणीयस्य पार्थ सारथिमुखोद्गत चरमश्लोक विहितस्य मधुक्षीरन्यायस्वगुण विषया सञ्जन कनन् महानन्दब्रह्मानुभव परीवाह भगवत्कैङ्कर्य रूपपरम पुरुषार्थ साधनस्य प्रपदनस्य

निर्धारण वकं स्थापनं प्रस्तुवन्ति । जगन्मात्रप्राप्यमित्यनेन सत्यवदनादीनामिवास्यापि सर्वाधिकारकत्वं व्यज्यते । हरि चरणसेवामित्यनेन भगवत्कैङ्कर्यं रूपपरमपुरुषार्थहेतुत्व मुच्यते, प्रपदन मित्युपायनाम निर्देशः, हरिचरणसेवमित्यनेन यथाक्रतुरस्मिन् लोके पुरुषोभवति तथेतः प्रेत्यभवती'त्युप निष दुदीरित तत्क्रतुन्यायेन प्राप्यस्य भगवतएव प्रपदनविष यत्वंव्यन्यते तेनाशक्योद्देश्यकत्वएव रामानुष्ठित समुद्र शर णागति वदानर्थक्य सम्भवात् प्रकृते तदभावो व्यज्यते, तेन परतत्व निर्णयोऽपिसूच्यते,तदेवं तत्वहितपुरुषार्थ पर्यालोचन पूर्वकं स्वनाम भूषित मतस्यत्रिकाल सम्भावित दूषण निरा करण पूर्वकं स्थापनं तृतीय पादेन प्रति पाद्यते ।

( भावार्थ ) कर्मादिक ( कर्मयोग भक्ति योग प्रभृति ) उपायोंको जितेन्द्रियोंसे भी दुःसाध्य और हरिचरण सेवारूपी प्रपत्तिको संसार मात्रमें सुसाध्य समझ कर जिन्होंने संसारमें रामानुज मतको स्थापित किया उन श्री लक्ष्मणजी के शरण में प्राप्त है ।

( अष्टाङ्गयोगंविनैव तत्वत्रयं प्रत्यक्षयति )

विधात्रादिस्तम्बावधिषु जडजीवाच्युतमयं,
गुणौर्जात्यानाम्ना निगमनुततत्वत्रय मिदम् ।
यदीयाच्छ्रीभाष्याज्जयति सुखवृद्ध्येसुमनसां,
प्रपद्ये श्रीमन्तं, कृपणशरणं लक्ष्मणमुनिम् ॥ २१ ॥

( अन्वयः ) गुणैर्जात्यानाम्ना विधात्रादिस्तम्बावधिषु जड जीवाच्युतमयम्, इदं निगमनुततत्त्वत्रयम्, यदीयात्, श्रीभाष्यात् सुमनसां सुखबृद्ध्यैजयति तं श्रीलक्ष्मणमुनिम् प्रपद्ये–

( व्याख्या ) गुणै रूपादिभिः जात्या सामान्येन ( जातिर्जातिञ्च सामान्य मितिकोषः ) नाम्नाऽभिधया, विधाताचतुर्मुख आदिर्येषां तेचते स्तम्बावधयश्च तृणगुच्छप्रभृतयस्तेषु तथोक्तेषु, जडोऽचेतनो जीवश्चेतनोऽच्युतःपरमचेतनस्तेषां प्राचुर्यं यत्र ( प्राचुर्येमयट् ) इदमेतत्, निगमेनवेदेननुतंस्तुतञ्चतत्तत्वत्रयं चिदचिदीश्वरविशिष्टम्, ( भोक्ताभोग्यंप्रेरितारञ्चमत्वेतिश्रुत्यनुसारेण निगमनुतत्वोक्तिः ) ( वणिक्पथःपुरंवेदोनिगमइतिकोषः ) यदीयात्यस्य श्रीलक्ष्मणस्यसम्बन्धिनः श्रीभाष्यात् तत्प्रोक्तग्रन्थात्, अर्थात् 'प्रथमोऽनन्तरूपश्च द्वितीयोलक्ष्मणस्तथा तृतीयोबलरामश्च कलौरामानुजोमुनिः,द्वापरान्तेकलेरादौपाषण्डप्रचुरेजने रामानुजेति भविता विष्णुधर्मप्रवर्तकः, आदौजगदाधारश्शेषस्तदनुसुमित्रानन्दनवेषस्तदुपरिधृतहलमुसलविशेषः श्रीरामानुजयतिपतिरेषः, इत्यादिवचनैः सएव रामानुजनाम्नाऽवतीर्य श्री भाष्यंरचयामासेति हेतोर्यदीयात् श्रीभाष्यादितिसुष्टूक्तम्–सुमनसां विदुषाम्,सुखवृद्ध्यैहर्षोत्पादनाय, जयति सर्वोत्कर्षेणवर्तते, तं श्री लक्ष्मणमुनिम् प्रपद्ये–

## ( तात्पर्य विवरणम् )

तदेवं समासेनतत्वहित पुरुषार्थान् निरूप्य दानीं 'द्रव्याद्रव्य प्रभेदान् मित मुभयविधं तद्विदस्तत्व माहुर्द्रव्यंद्वेधाविभक्तंज ड़मजड़मिति प्राच्यमव्यक्त कालौ। अन्त्यं प्रत्यक्पराक्च प्रथम मुभयथातत्र जीवेश भेदान् नित्याभूति र्मतिश्चेत्यपरमिहजड़ा मादिमां केचिदाहुः'। 'तत्रद्रव्यंदशावत्प्रकृतिरिहगुणैस्सत्वपू र्वैरुपेता कालोऽब्दाद्याकृतिस्स्यादणु रवगतिमान्जीव ईशोऽन्य आत्मा। सम्प्रोक्तानित्यभूति स्त्रिगुणसमधिका सत्वयुक्ता तथैवज्ञातुर्ज्ञेयावभासोमति रिति कथितं संग्रहात् द्रव्यलक्ष्म, तत्तद्रव्येषु दृष्टंनियतिमदपृथक् सिद्ध मद्रव्यजात' मितितत्व विभागे तल्लक्षणेच सिद्धान्तसिद्धे सत्यपि प्रकृत्यात्मभ्रमस्व तन्त्रात्मभ्रमयोः प्रथमतो निराकरणार्थं भोक्ताभोग्यंप्रे रितारञ्चमत्वाजुष्टस्ततस्तेना मृतत्वमेति ) इत्युप निषदुक्तरीत्या चिद चिदीश्वर रूपेण तत्वत्रय विभागमेव बहुशः आचार्या आद्रियन्ते, तत्रदेहस्य स्वविशेषणत्वाग्रहेणोत्पन्नः प्रकृत्या त्मभ्रम आत्मव्यतिरिक्तत्वेनाचेतननिरूपणेनोपशाम्यति तथा स्व विशेष्य भगवदग्रहेणोत्पन्नः स्वतन्त्रात्मभ्रमः स्वा धीन त्रिविध चेतनाचेतन स्वरूपस्थिति प्रवृत्ति भेदस्य भग वतो निरूपणेनोपशाम्यति अतः पूर्वाचार्य परिगृहीतं श्री भाष्यादि ग्रन्थेषु प्रपञ्चितं तत्वत्रय विभागमेव निरूपयन्ति विधात्रादिस्तम्बावधिष्वित्यनेन, तत्तत्प्रमाण सिद्धं पदार्थ

जात मभिधीयते, । जड़ जीवाच्युतमय मित्यनेन चिदचिदी श्वररूपेण विभागोबोध्यते । गुणैर्जात्या नाम्नेत्यनेन समन न्तरोद्धृत श्लोक प्रतिपादितानि गुणजाति नामान्यभिधीय न्ते । निगमनुत तत्वत्रय मित्यनेनैतादृश तत्वत्रय विभागस्य भोक्ता भोग्यं प्रेरितारञ्च मत्वेति श्रुत्यभिहितत्व मुच्यते, यदीयोच्छ्रीभाष्याज्जयतीत्यनेन श्रीभाष्य एतेषां सम्यङ् नि र्णयो व्यधायीति व्यज्यते, तदेवं सम्यङ् न्यायानुगृहीत प्रमा णैस्तत्वत्रयं निर्णयतां मोक्षावधि सुखं सम्पनीपद्यत इतिसुख बृद्धै सुमनसामित्यनेन बोध्यते।

( भाषार्थ ) गुण जाति तथा नामोंसे ब्रह्मासे लेकर तृण पर्यन्त अचेतन चेतन व परम चेतन मय यह वेदोंसे वन्दित जो तत्वत्रय हैं वह जिसके प्रतिपादन किए हुए श्री भाष्य नामक ग्रन्थके द्वारा विद्वानोंके आनन्द देनेके लिए सर्वो त्कर्षसे वर्तमान है उन श्रीमान् दीनोंके रक्षक श्रीलक्ष्मण जीके शरणमें प्राप्त हैं ।

( इत्यनेनपूर्वावताम्प्रणीतव्याकरणरीत्यैवैक्यशब्दमाह— )

वदत्यैक्यंकिञ्चित्पद मपिनसुप्तिङ्कृदुदितं
तथाप्यद्वैतीयःस्मरतिनविभक्तिप्रकृतिजम् ।
हठग्राहग्रस्तोयदमलवचः पथ्य विरहात्,
प्रपद्ये श्रीमन्तंकृपण शरणं लक्ष्मणमुनिम् ॥२२॥

( अन्वयः ) किञ्चिदपि सुप्तिङ्कृदुदितं पदम् ऐक्यं न वदति

तथापि हठग्राहग्रस्तः,अद्वैतीयः, यदमलवचःपथ्यविरहात्,वि
भक्तिप्रकृतिजंपदं न स्मरति तंश्रीलक्ष्मणमुनिम् प्रपद्ये —
(व्याख्या) किञ्चिदपिकिमपि सुप्चतिङ्चक्रञ्चते लैरुदितं
सुबन्ततिङन्तकृदन्तनिष्पन्नम्, पदंसुप्तिङन्तरूपम्, एवंयमेक
त्वम्, नबदति नकथयति,तथापिप्रबलतरैतदुपरोक्तप्रमाणेस
त्यपि हठएवग्राहस्तेनग्रस्तआग्रहमकरगृहीतः, अद्वैतीयःअद्वैत
मतावलम्बी, यस्य श्रीलक्ष्मणस्यामलं निर्मलं यद्वचोवचनंतदे
व पथ्यं लोकोपकारकं तस्यविरहोऽभावस्तस्मात्, विभक्तिः
सुप्तिङ्चयरूपा प्रकृतिःशब्दस्ताभ्याञ्जातमुत्पन्नम्, (विभक्ति
श्च,सुप्तिङौविभक्तिसंज्ञौस्तः) पदंसुप्तिङन्तरूपम् नस्मरतिन
भजते तंश्रीलक्ष्मणमुनिम् प्रपद्ये —

(तात्पर्य विवरणम्)

तदेवंस्वमतस्थेम्नेतत्वत्रय स्वरूपं श्रुत्यनुमतंप्रतिष्ठाप्येदानीं
सच्चिदानन्दकूटस्थ निर्विशेष ब्रह्मैक्यमेव तत्वम्, अन्यत् सर्वं त
स्मिन् परिकल्पितं मिथ्याभूतमिति प्रजल्पतामाम्नायचर्चा
कवचधृतिकनद्धोमुखद्वीपिनां प्रच्छन्न बौद्धानाँमृषावादिनांमतं
निरस्यन्ति बदत्यैक्यं किञ्चिदित्यादिनापद्येन। तत्रप्रत्यक्षस्य
स्वरूप निरूपकधर्मविशिष्ट धर्मिविषयत्वेन तस्यापि निर्वि
शेषाद्वैतबोधकत्वंनसम्भवति। अनुमानस्यपक्षतद्धर्म हेत्वादि
विषयत्वेनचन निर्विशेष बोधकत्वमिति सिद्धवत्कृत्य तस्यश
ब्दगम्यत्वं निरस्यते बदत्यैक्य मित्यादिना तत्रब्रह्मव्यतिरिक्त

सर्वभेदमिथ्यात्व वादिनोऽद्वैतिनोऽद्वैतस्य द्वैतप्रति योगिकत्वा-
त् प्रतियोग्यप्रसिद्धौ तदभावाप्रसिद्धेरद्वैतसिद्धिरेव न सम्भव-
तीत्यैक्य रूपस्या द्वैतस्य दुर्निरूपत्वादेवावाच्यत्वंनिरुह्यते,
ननु गगन कुसुमंनास्तीत्यादाविव भ्रान्ति सिद्धोभेदोऽभावप्र-
तियोगी भवतीति वक्तव्यं विकल्पासहत्वात्। सभेदःस
त्यादभिन्नो भिन्नोवा। भिन्नत्वञ्च सत्यं मिथ्यावेति विक
ल्पयामः तत्र न प्रथमः सत्यादभिन्नत्वे भ्रान्ति सिद्धत्वासि
द्धेः द्वितीयकोटौच न भेद निष्ठ भिन्नत्वस्य मिथ्यात्वमिति
कल्पोऽव कल्पते, भि न्नत्वस्य मिथ्यात्वेऽभेद एवसिद्धइति
पूर्वोक्तदोषानतिवृत्तिस्सम्पनीपद्यते, भिन्नत्वं सत्यंचेति
कल्पेसत्य भेदोप गतिरिति अपसिद्धान्तादिदोष सहस्रमुन्मि-
षति,किञ्चभेद सत्यत्व मनङ्गीकृत्यभेद मिथ्यात्व साधनेप्रवृ
त्तस्य भेदसत्यत्वा भ्युपगमेघट्टकुट्यां प्रभात प्रायारजनी,किञ्च
सत्यभेदाङ्गीकारे स एव निषेधप्रतियोगी भवितुमर्हतीति
किंतस्य मिथ्यात्व कल्पनेनेति दूरतो धावनं श्रममात्रफलं
भवति तदेतत् संगृहीतमाचार्यैः नन्वद्वैते निषेध्योगगन कुसुम
वत्भ्रान्तिसिद्धोऽस्तुभेदोमैवंसत्यादभिन्न स्सखलु नयादतत्
भ्रान्ति सिद्धत्व सिद्धिः, भिन्नत्वं चास्य तस्मात् यदिभवति
मृषासिद्धि दत्तोत्तरन्तत्सत्यंचेत् सत्यभेदोपगतिरितिमुधादूर
तोधावनं वः' इति, किंच 'ब्रह्मणो निर्विशेषत्वमितिधर्मोऽस्ति
वा नवाद्विधापि सविशेषत्वं तयोग तदयोगजमित्युक्त री

त्वा सविशेषत्वमेव सिद्ध्यतीति अतः पदार्थस्य दुर्निरूपत्वा च्छब्दवाच्यत्वं न सम्भवतीति सिद्धम् । किंचशब्दस्वभाव पर्यालोचनेऽपि निर्विशेषाद्वैतस्य वाच्यत्वं नयुज्यते प्रकृति प्रत्यय रूपेण विभक्तेपदे प्रकृति प्रत्ययार्थौ परस्पर भिन्ना वेव प्रतिपाद्येते किंचतत्तत्तन्त्रनिष्ठ निर्णीतेऽभि हितान्वये ऽन्विताभिधानेवान्वयस्य द्विष्ठत्वात् वस्तु द्वयानङ्गीकारेणा न्वयस्यबोधकत्वमेवनसङ्घटीति । नचनिर्विशेषपदंनिर्विशेषा र्थं बोधकं समस्तीति अभिमन्तव्यम् । निर्विशेषपदमाप्तोक्तंञ्चे त् सर्वेषां पदानां प्रवृत्तिनिमित्त विशिष्टार्थ वाचकत्वात्स्वय मपि निर्विशेषत्व विशिष्टमेवा भिदधीतेति सर्व विशेषनिषे धस्य स्वव्यापार विरुद्धतया तत्तत्प्रकरणादुपस्थापित यत्किंचिद्विशेष निषेधकमेव भवति, निर्विशेषा पुरीतिवत् । अनाप्तोक्तञ्चेद्गगनार विन्दादिपदवदयोग्यार्थ पदसमभि व्याहार मात्रमित्यभिदध्महे, तदेवंवाच्यस्य दुर्निरूपतया वाचकस्वभावेनचनिर्विशेषाद्वैतबोधकत्वंनसम्भवतीति,यथाहुः वदत्यैक्यंकिञ्चित् पदमपिनसुप् तिङ्कृदुदितमिति । तत्रसुप्तिङ् कृदुदित मित्यनेन प्रकृतिप्रत्ययभेदेन नानार्थ याथार्थ्यमभ्युपेय मितिसूच्यते । तदेवंशाब्दबोधप्रकारे निर्णीतेऽप्यद्वैतिनः परम हितनिर्दुष्टभाष्यकारवचनमनङ्गी कुर्वाणादुराग्रह ग्रहिलमनसो विभक्तिप्रकृतिजंपदंयथा वस्थितार्थबोधकं वोध्यमानाअपिन बुध्यन्तइतिशेषेण प्रतिपाद्यते, पित्तोपहतस्यक्षीरमिव भाष्य-

कारबचनं हठग्राहग्रस्तानां हृदयङ्गमंनभवतीति तेषामेवदाषा द्व्यत्वंध्वन्यते । एतेनश्लोकेन "शब्दस्यतुविशेषेण सविशेष वस्तुन्येवाभिधान सामर्थ्यं पदवाक्य रूपेणप्रवृत्तेः । प्रकृति प्रत्ययोगेनहि पदत्वं, प्रकृतिप्रत्ययोरर्थ भेदेनपदस्यैव विशि-ष्टार्थप्रतिपादन मवर्जनीयम् । पदभेदश्चार्थभेद निबन्धनः पदसंघातरूपस्य वाक्यस्यानेक पदार्थसंसर्ग बोधकत्वेननिर्वि शेषवस्तु प्रतिपादना सामर्थ्यात् न निर्विशेष वस्तुनिशब्दः प्रमाणमिति भवभयाभि तप्तजनभागधेय वैभव भागितावतर-णानां परम कारुणिकानां श्रीभाष्यकाराणाँ श्रीभाष्य श्रीसूक्ति रनुस्मार्यते । तदेवं निर्विशेष पदार्थस्य शब्दबोध्यत्वा सम्भवात् निर्विशेषाद्वैत वादस्यवेद बाह्यत्वं व्यञ्जित मिति सिद्धम ॥२२॥

( भाषार्थ ) कोई भी सुवन्ततिङन्त और कृदन्त शब्द एकता को नहीं बतलाते तथापि जिनके सद्वचनोंके पथ्यके अभाव से हठरूपी ग्राह से ग्रस्त अद्वैती लोग प्रकृति विभक्ति से उत्पन्न पदको नही मानते उन श्रीमान् दीनोंके रक्षक श्री लक्ष्मणजी के शरण मे प्राप्तहैं ।

(त्रिरूपकथन प्रकारेणापि पुनःतत्वत्रयंषड्दर्शनैः प्रमाणयति— )

हरिंजानामीति स्फुरति सुसमाधावपियत—
त्त्रिरूपत्वं सर्वागमविहित मत्यन्तसुदृढम् ।
समस्त नेदान्ते यदपिकुदृशः पालयतितान्—
प्रपद्येश्रीमन्तं कृपणशरणं लक्ष्मणमुनिम् ॥२३॥

( अन्वयः ) हरिं जानामि, इति सुसमाधावपि यतः स्फुरति, अतः सर्वागमविहितं त्रिरूपत्वम् अत्यन्तसुदृढं तदपि कुदृशः समक्षं नेक्षन्ते तान् ( यः ) पालयति तं श्रीलक्ष्मण मुनिं प्रपद्ये–

( व्याख्या ) हरिं श्रीमन्नारायणम् जानामि वेद्मि, इत्येवं, सुसमाधावपि योगदशायामपि यतःकारणात् स्फुरति प्रकाशते, अतोऽस्मात्कारणात् सर्वागमेष्वविहितं निखिलशास्त्रप्रतिपादितम्, त्रिरूपत्वं ज्ञातृज्ञेयज्ञानरूपत्वम्, अत्यन्तसुदृढं वेदविहितत्वादतीव परिपुष्टम्, तदपि त्रिरूपत्वस्य दृढतरत्वादपि कुत्सितादृक् येषान्ते कुदृशोऽविचारशीलाः समक्षं प्रत्यक्षम्, नेक्षन्ते नावलोकयन्ति, ( अतएव कुदृशोऽत्यान्धीभूता इति यावत् )तान् पूर्वोक्तानपि,( अपीत्यध्याहार्यः ) यः श्रीलक्ष्मणः पालयति रक्षति ननुस्वमूर्ध्नाधृतायां वसुन्धरायास्तानधः पातयति विपूर्वकाद्धाञ्धातोर्क्तप्रत्यये दधातेर्हिरिति ह्यादेशेविहितमिति–तं श्रीलक्ष्मणमुनिं प्रपद्ये–

( तात्पर्य विवरणम् )

न वयं प्रमाणान्तरेण निर्विशेष वस्तुसिद्धि मभ्युप गच्छामः स्वानुभव सिद्धंहितदिति परेषाँ प्रलापंज्ञानस्य कर्म कर्त्र वच्छिन्ना वभास रूपत्वेन सविशेषत्वं साधयन्तो निरुन्धते हरिं जनामीत्यादिना पद्येन तत्र पूर्वार्धेन दोष गन्ध विधुरायां विषयान्तर व्यासङ्ग रहितैकाग्र्य साध्यायां शमदमादि

सम्पन्नाधिकारि निर्वाह्यायां योग दशायामपि हरिं जानामी तिहिज्ञानं स्वयम्, प्रकाशतेइत्यतोज्ञानस्यत्रिरूपत्व मवर्जनीय मिति प्रति पाद्यते,सुसमाधा वितिसुशब्देन दोष विधुरत्वं गुण भूयिष्ठताचाभिप्रेयेते,अत्यन्त्य सुदृढ़ मित्यनेन स्वानुभव सिद्धत्वेन सहृदयं नोस्तिकैः रप्यप्रधृष्यत्वं सूच्यते । तदेवं सर्वानुभव साक्षिक मप्यर्थं धाष्ट्र्येनानभ्युपगच्छतां कुदृशामपि "आत्मद्रुह ममर्यादं मूढ मुज्झितसत्पथं । सुतरामनुकम्पेत नरकार्चिष्म दिन्धन मित्युक्तरीत्या कृपापूर्वकं पालनस्य कथनेन तेषां कुदृशां दोषा करत्वं श्रीभाष्य कारस्योभय लिङ्गताच तृतीय पादेन व्यज्येते । अनेनश्लोकेन यस्तु स्वानुभव सिद्धमिति स्वगोष्टी निष्टस्समयः । सोऽप्यात्म साक्षिक सविशेषानुभवादेव निरस्तः । इदमह मदर्शमिति केनचिद्विशेषेण विशिष्टविषयत्वात् सर्वेषामनुभवानामिति श्रीभाष्य सूक्तिरनुस्मार्यते । एतेनस्वानुभव विरुद्धत्वञ्च दाम्भतस्य व्यज्यते ॥ २३ ॥

( भावार्थ ) "मै भगवान्को जानताहूँ" यह बुद्धि समाधि मे भी स्फुरित रहतीहै तथापि सर्व शास्त्र प्रतिपादित अत्यन्त सुदृढ़ त्रिरूपत्व ( ज्ञातृ-ज्ञेय, ज्ञान इत्यादि ) को भी कुदृष्टि लोग सामने नहीं देखते, उनकी भी जो रक्षा करते हैं उन श्रीमान् दीनों के रक्षक श्रीलक्ष्मणजी के शरणमे प्राप्त हैं ।

नृणांमोक्षेलक्ष्याःक्वचिदपि शिवब्रह्मसनका—
गणेशोऽर्कःशक्तिः कपिलकणभुक् सांख्यसुगताः ।
यदानासन्नारायण सुमहिषीप्रै रिरतयं—
प्रपद्येश्रीमन्तं, कृपणशरणं लक्ष्मणमुनिम् ॥२४॥

( अन्वयः ) शिवब्रह्मसनकाः, गणेशः, अर्कः शक्तिः कपिलकण भुक्साँख्यसुगताः, यदा, क्वचिदपि, नृणांमोक्षे लक्ष्याः, नासन्, तदा, नारायणसुमहिषी, यं, प्रैरिरत तं श्रीलक्ष्मण मुनिं प्रपद्ये—

( व्याख्या ) शिवश्चब्रह्माच सनकश्चते शिवब्रह्मसनका रुद्रस्वयम्भूसनकादयः, गणेशोगणपतिः, अर्कोभास्करः, शक्ति र्देवी, कपिलश्चकणभूक्च सांख्यश्चसुगतश्चते कपिलकणाद सांख्यबौद्धाः, यदायस्मिन्समये, क्वचिदपि कदाचिदपि नृणां मानवानाम्, मोक्षे परमपदप्रदाने, लक्ष्या उदाहरणीभूताः, नासन्नाभवन्, तदातस्मिन्नवसरे, नारायणस्यसुमहिषी नारायणसुमहिषी लक्ष्मीः, यं श्रीलक्ष्मणम्, प्रैरिरत प्रेरित वती, तं श्रीलक्ष्मण मुनिं प्रपद्ये—

( तात्पर्य विवरणम् )

तदेवं स्वानुभव विरुद्ध सिद्धान्त स्थापकत्वं मृषावादिना मभिधायेदानीं मतान्तरणाँभ्रमप्रमाद विप्रलिप्साशक्तिमूलत या मोक्षानुपयोगित्व मुद्वीक्ष्य नित्यमज्ञात निग्रहया वात्सल्य सहचरित मातृत्व माननीयया श्रीलक्ष्मीदेव्या सम्यक् सम्प्रदाय

प्रवर्तनेनसर्वेषां मुक्त्युपलम्भनार्थं, अन्येचानादि सिद्धाः श्रुति समधिगताः, सूरयः सन्त्यसंख्याः कर्माभावा दनादेर्नतुभवति कदाप्येषु संसारगन्धः" इत्युक्तरीत्यासंसारगन्ध रहितानां नित्यसूरीणामन्यतमस्य श्रीशेषस्य प्रेषणस्य वर्णनेन प्रकृत सिद्धान्तस्य स्वतस्सर्वज्ञ भ्रमप्रमादादि दोषविधुर श्रीशेष प्रवर्तितत्वया मुक्त्युपयोगित्वं विशदयन्निःनृणाँमोज्ञे इत्यादिना पद्येन। तत्र शिवब्रह्म सनक गणेशार्क शक्ति कपिल कणभुक् सेश्वर सांख्य सुगतास्तत्तन्मत प्रवर्तकाः कथ्यन्ते। यदाते मनुष्याणांमोक्षसाधनेऽसमर्थाःसमभूवन्,तदानारायणसुमहिषी लक्ष्मीर्यं समीहितसाधनाय प्रेषयामासेति तृतीयपादेनप्रतिपा द्यते । अतःप्रकृतसिद्धान्तनिष्ठानां मोक्षावश्वंभावो ध्वन्यते ॥ २४ ॥

( भाषार्थ ) रुद्र ब्रह्मा सनकादिक गणेश सूर्य,देवी कपिल कणाद साँख्य ( सेश्वर ) बुद्ध इत्यादि जब किसी प्रकार मनुष्योंके मोक्ष देनेमें समर्थ नहीं हुए, और मोक्षके स्वतः उदाहरण नहीं हुए उसी समय श्री लक्ष्मीजो जिनको समर्थ समझ कर उस कार्यके लिए भेजा उन श्रीमान् दीनोंके रक्षक श्रीलक्ष्मणजीके मै शरण हूं ।

ततोविष्णोर्हस्ताङ्कित कनकपत्रेद्धमुभयो,
विभूत्योर्नेतृत्वंसुखनियममाश्रित्ययतिराट् ।
चलत्स्थास्नूनज्ञानमुचदलमुग्राहिजूम्भतः—

प्रपद्ये श्रीमन्तंकृपणशरणं लक्ष्मणमुनिम् ॥२५॥
( अन्वयः ) ततः,यतिराट्,विष्णोर्हस्ताङ्कितकनक पत्रेद्धंसुख नियमंउभयोर्विभूत्योः, नेतृत्वम् आश्रित्य, उग्राहिजगतःअज्ञानचलत्स्थास्नून्, अलममुचत् ( तं ) श्री लक्ष्मण मुनिम्प्रपद्ये
( व्याख्या ) ततःनारायणमहिषीप्रेरणानन्तरम्, यतीनांराट् यतिराट्वेषधारीश्रीशेषनारायणः विष्णोःश्रीपतेःहस्तेलक्ष्मरेखाङ्कितंचिन्हितंयत्कनकपत्रं सुवर्णपत्रम् तेनेद्धंदीप्तम्, (स्वर्णं सुवर्णं कनकमित्यमरःइन्धीदीप्तावित्यस्मात् क्तप्रत्ययेनलोपेचइद्धमिति सुखेनअनायसेननियमः सर्वानुकूलकार्य्यप्रणाली यस्यतत्, उभयोर्द्वयोः, विभूत्योः लीलाविभूतित्रिपाद्विभूत्योः नेतृत्वमाधिपत्यम्, आश्रित्यलब्ध्वा, उग्रोयोऽहिःसइव जगत् तस्मात् कठिनव्यालसंसारात्, अज्ञान्बोधरहितान्, चलत्स्थानून्जङ्गमस्थावरान् अलंपर्याप्तम् अमुचत् मोचयामास ( तं ) श्रीलक्ष्मण मुनिम् प्रपद्ये,

( तात्पर्य विवरणम् )

तदेवं मतान्तराणाँ मोक्षासाधकतामुद्घोद्यतत्साधनार्थं प्रेषणेन प्रकृतमतस्य मोक्षसाधनत्व मितिवृत्त वर्णनेन प्रत्यपादि । अथेदानीमुभय विभूतिनाथेन श्रीमन्नारायणेन स्वहस्ताक्षर लांछित पत्रिकावितरण पुरस्सरं विभूतिद्वय नेतृत्वप्रदानमपि प्रस्तुवन्तस्तदाज्ञानुसारेणभूम्यामवतीर्य सर्वेषां तत्वार्थ

मुपदिश्य स्थिर चराणां तत्तदुपाया नुष्ठानेन मोक्षयितृत्वं निरूपयन्ति ततोविष्णोरित्यादिनापद्ये न । यतिराडित्यनेनस्य त्याधिपत्यं"अनपायि विष्णुपद संश्रयंसदा कलयाक्याधिकल याप्युनुज्झितम्,अकलङ्कयोगमजड़ाशयोदितंयतिराजचन्द्रमुप रागदूरग" मित्युक्त प्रकारेणचन्द्र सादृश्यमपि श्लेषेणाभिधीय ते । हस्ताङ्कितकनक पत्रेद्धमित्यनेनेतर मतस्थापकैरप्यनासा दितपूर्वामिह्यायसां सम्भावना भगवतः सकाशादाचार्यैरधि गतेतिव्यज्यते । ततोविष्णोरित्यामन्तर्यार्थं कस्य ततश्शब्दस्य प्रयोगाच्छ्रिया प्रथमतो नियमनानन्तरं तयैव पुरुषकारभूतया प्रतिबोधितेन भगवताऽनुगृहीतत्वं व्यज्यते उभयोर्विभूत्योर्ने तृत्वं मित्यनेन विभूतिद्वय नायक इतिवचनं स्मार्यते तृतीय पादेनस्थिर चराणामतिभयङ्कर महासर्प सन्निभ संसारान् मोचयितृत्वमुच्यते । एतेनानुष्ठापनेन मोचयितृतायाः प्रद र्शिततथास्यमतस्य विश्रम्भ णीयत्वं ध्वन्यते ॥ २५ ॥

( भाषार्थ ) तत्पश्चात् ( श्रीलक्ष्मीजी द्वारा भेजे जानेके पश्चात् ) श्रीमन्नारायणके कर कमलों द्वारा लिखित सुवर्ण पत्रसे प्रकाशित सर्वानुकूल नियम युक्त दोनों विभूतियों ( लीला विभूति त्रिपाद विभूति ) के संरक्षण भार को ग्रह ण करके जिन रामानुज स्वामीने अज्ञानी चराचर जीवोंको संसार रूपी सर्पके मुखसे छुड़ाया है, उन श्रीमान् दीनोंके रक्षक श्री लक्ष्मणजीके शरणमें प्राप्त हैं ।

प्रचण्डैश्चार्वाकैर्दुरितधिषणैर्बौद्धनिकरै
स्तमस्संघैरन्धेजगतिमुकुटार्कावलिभृतः ।
अनाचारैर्जैनैर्दशशतमुखादभ्युदितवान्
प्रपद्ये श्रीमन्तं कृपणशरणंलक्ष्मणमुनिम्॥२६॥

( अन्वयः ) तमःसंघैःप्रचण्डैः चार्वाकैः दुरितधिषणैः,बौद्धनिकरैः, अनाचारैः, जैनैरपि, जगति अन्धेसतिमुकुटार्कावलिभृतः दशशतमुखात् ( यः ) अभ्युदितवान्, तम् श्रीलक्ष्मण मुनिं प्रपद्ये,

( व्याख्या ) तमसोऽज्ञानस्यसंघासमूहरूपास्तैः( अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रंतिमिरंतमइत्यमरः , प्रचण्डैरुद्धतैः, चार्वाकैर्लोकायतिकैः दुरिता दुष्कृता पापयुक्तेति यावत् धिषणा बुद्धिर्येषांतैः ( कलुषं वृजिनैनोघमंहो दुरित दुष्कृतमित्यमरः बौद्धानाँ सौगतानाँ निकराः समूहास्तैः ( सर्वज्ञः सुगतोबुद्धो धर्मराजस्तथागत इत्यमरः ) अनाचारै राचाररहितैः, जैनैर्जिनमतावलम्बिभिः अपीतिनिश्चयार्थद्योतकः जगति संसारेअन्धे सारासारविवेक रहिते सति, मुकुटान्येव किरीटान्येवार्काः सूर्य्यास्तेषामावलिं पङ्क्तिं विभर्तिधारयति तस्मात् (अथ मुकुटंकिरीटंपुन्नपुंसकमितिकोषः)दशशतञ्चतन्मुखं तस्मात्सहस्राऽननात्,यःअभ्युदितवान्उक्तवान् तं श्रीलक्ष्मणमुनिम्प्रपद्ये

( तात्पर्य विवरणम् )

इदानींफणामणि सहस्रभूषितोत्तुङ्गोत्तमाङ्गमण्डित श्रीशेषरूप

मास्थायपरमतनिरासमुपवर्णयन्ते । प्रचण्डैरित्यादिनापद्ये न,तत्रयथाश्वानःपरस्परं विद्विषन्तोऽपिवराहमेकमत्येनमारयितुमहमहमिकयाऽपतन्ति,तथैव परस्परंमतेऽपरिमितेविसम्बादे विद्यमानेऽपि 'परस्परं विरोधेतुत्रयंपञ्चचते शतं । अन्यैस्सह विरोधेतुत्रयंपञ्चोत्तरंशत'मितिधर्मराजवचनंप्रमाणयन्त इवैकमत्येन श्री सिद्धान्त विध्वंसनेचतुर्विधा बौद्धाः जैनाश्चार्वाका अन्येऽपिनास्तिकाअहं पूर्विकया प्रयतन्ते,तथाप्रवर्तमानान् स्वव्याधातादिदोषशतकवलित कुतर्ककल्कभूषितदुर्वादसम्भृतान् तान् नास्तिक परिबृढानादित्य इवतमस्संघातन्तत्वा लोकलब्ध साहाय्येन वाग्वज्रेण विनाशितवान् भगवान् भाष्यकारः । तदानींतिरस्करण्यन्तर्हिताः श्रीभाष्यकारायथा वस्थितस्वरूप मास्थाय सहस्रवदनैरुत्तर मुदीरयन्तो हेलयैवविजिग्यिरे इति कथानेन व्यज्यते । प्रचण्डैश्चार्वाकैरित्यनेनतेषाँ लोकायतिकानां देहात्मवादकार्य कारणभाव भङ्ग प्रत्यक्षेतर प्रमाणनास्तित्व बादप्रभृति कुतर्कलब्ध प्रतिष्ठतया दुर्जयत्वेन प्रचण्डत्व मुच्यतेबौद्ध निकरैरित्यनेन भिक्षुपाद प्रसारणन्यायेन क्षणभङ्ग प्रत्यक्षभङ्ग बाह्यार्थ भङ्ग द्वारा सर्वशून्यबाद निष्ठा,वैभाषिक सौत्रान्तिक योगाचार माध्यमिकाः वेदाबुद्धागमाश्च स्वयमपिहि मृषामानता चैव मेषाँबौद्धा बुद्धिः फलञ्चस्थिर तदितरतायन्त रालञ्चबुद्धेः॥ आतस्त्रैविद्य डिम्भान्प्रसितु मुपनिषद्धार बाणोपगूढैः प्रायः

प्रच्छादितास्वा पटुभिरसुरता पौराड्रकाद्वैसानेष्ठैः इत्याचार्य्यैः "वेदोऽनृतोबुद्ध कृतागमोऽनृतः प्रामाण्यमेतस्यच तस्यचानृतं। बोद्धानृतोबुद्धि फलेतथानृते यूयञ्चबौद्धाश्च समान संसदः" इति यादवप्रकाशाचार्य्यैश्चोपाल्लब्धामायावादिनोऽपिसंगृह्यन्ते। दुरितभिषयैः तमस्संघै रित्यनेन "पापंप्रज्ञां नाशयति क्रियमाणं पुनः पुनः। नष्टप्रज्ञःपापमेव पुनरारभतेनर" इत्युक्तरीत्या पुनः पुनः पापानुष्ठानेन नष्टबुद्धित्वं "अधर्मं धर्ममितिया मन्यते तमसानृता। सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थतामसीति" गीतोक्तप्रकारेण तमोनिबन्धन बिपरीतद्रष्टुत्वमुच्यते, अन्धेजगतीत्यनेन यथावस्थितार्थ ज्ञान विधुरत्वमुच्यते। मुकुटार्काबलिभृतो दशशतमुखादित्यनेन "पत्युस्सम्यमिनाँ प्रणम्यचरणौ तत्पादकोटीरयोः सम्बन्धेन समेध्यमान विभवान्धन्याँ स्तथान्यान् गुरूनिति" निगमान्त महादेशिकानुगृहीतरीत्या यतिराजतया तच्छरणाकिरीट निकर मण्डित सहस्रमुखैरुत्तरदानेन निरासकत्वं बोध्यते, तेनादि शेषरूपधारणस्वस्य तदवतार रूपत्वञ्चाभ्यज्यते। नास्तिकानां तमस्संघत्वेन मकुटस्यार्कत्वेनच वर्णनात् सूर्य्यस्यतमोनिरास इवाचार्याणाँ नास्तिक निरासोऽनायासेनैव सम्पन्न इति व्यज्यते, तेन श्रीसिद्धान्तस्य सर्वोत्कर्षः प्रकाश्यते।

( भावार्थ ) प्रचण्ड नष्ट बुद्धि अनाचारी तथा अन्धकार रूप, चार्वाकों बौद्धों और जैनों के द्वारा जब संसार अज्ञा-

नाश कर दिया गया तब जो मुकुटोंके ब्याज से अनन्त सूर्य्यों को धारण करने वाले सहस्र मुखों से (मतान्तरों का खण्डन कर) अभ्युदित हुए उन श्रीमान् दीनों के रक्षक श्रीलक्ष्मणजीके शरण मे प्राप्त हैं ।

(एतेनाघटितघटनापटीयसीं शक्तिमाह)

अनाधारश्शेषः कथमिदमितिस्तम्भयतिचेत्–
स्वमायामाहात्म्यान्नटइव कुतर्कं परिहरन् ।
स्वरारोहन्नृत्यन् सुघटयतियो दुष्करतरं–
प्रपद्येश्रीमन्तं कृपणशरणं लक्ष्मणमुनिम् ॥२७॥

(अन्वयः) अनाधारः शेषः, इदं कथं स्तम्भयति, इतिचेत् स्वमायामाहात्म्यात्, स्वरारोहन् नृत्यन् नटइव कुतर्कं परिहरन्, यः, दुष्करतरं सुघटयति, तं श्रीलक्ष्मणमुनिं प्रपद्ये,

(व्याख्या) नविद्यत आधारोयस्यासावनाधारोनिराश्रयः, शेषः फणी इदंजगत्, कथंकेनप्रकारेण स्तम्भयतिधारयति, निराश्रयस्य गुरुतरपदार्थं गृहीतुमशक्यत्वादितिचेत्, स्वमायामाहात्म्यं स्वमायामाहात्म्यं तस्मात् स्वकीयलोकोत्तरैश्वर्य्यशक्तियोगप्रभावात्–लोकेऽपितादृशशक्ति गौरवंवर्तत इत्यत आह, स्वर्दिवम्, आरोहन्, (वेणवादिना) नृत्यन्गात्रं विक्षेपयन्, नृतीगात्रविक्षेपेऽस्मात्शतृप्रत्ययः–नटइव शैलूष इव, (शैलालिनस्तु शैलूषाजायाजीवा कृशाश्विनः, भरता इत्यपिनटाइत्यमरः) कुतर्कं दुर्वादम्, परिहरन् निराकुर्वन्,

यः श्रीलक्ष्मणः, अतिशयेनदुष्कर मितिदुष्करतरं कठिनतरम्, ( कार्यमितिशेषः ) सुघटयति सम्पादयति, तं श्रीलक्ष्मण मुनिं प्रपद्ये–

( तात्पर्य विवरणम् )

तदेवं प्रतिमतस्थदुर्वैतण्डिकवैतण्डानां सिद्धान्तप्रवचन सिंहनादेन निरासमुपवर्ण्येदानीमवतारप्रयोजनस्य निष्पन्न-त्वात् आलम्बननिरपेक्षं स्वशक्तिमाहात्म्यमात्रसाहाय्येन परमपदारोहण मुपवर्णयन्त एतादृशाङ्ग् लवृत्तान्तेन नास्ति-ककल्पानां केषाञ्चिदार्य्यभट्टप्रभृतीनां ज्योतिर्विदां कुतर्क मपिनिरस्तं ज्ञापयन्ति अनाधार इत्यादिना पद्येन। तत्र प्रथम पादेन तेषांकुतर्क उपन्यस्यते, यदि पृथिव्या अतिगुर्व्या विधारणार्थं शेषः कल्प्यते, तर्हिगुरुभूतस्य तस्यापि विधारणार्थं मन्यदपिकल्पनीयं प्रसज्यत इत्यप्रामाणिकानवस्था प्राप्नोति, यदि स्वशक्त्या शेषस्य स्वपरनिर्वाहक समाधिना विधृतत्व मिष्यते तर्हिपृथिव्या एवतादृशधारकत्वमस्त्विति । तमिम माक्षेपंशेषेण परिहरन्ति तत्रहेतुः स्वमाया माहात्म्या दित्य-नेनोच्यते विचित्रशक्तिप्रभावात् सर्वं संघटत इत्यविचारित रमणीयेयमाक्षेपाडम्बरविडम्बना। तादृशविचित्र शक्तियोग मेव परमपदारोहण वृत्तान्तेन साधयन्ति स्वरारोह न्नित्या-दिना । स्वरारोहस्यहेलासिद्धतां दृष्टान्तेन विशदयन्ति नटइवेति । यथानटअनायसेनैव दुष्करतरचरित्रमभिनयति

तथेदमपीत्यर्थः दुष्करतरमित्यनेनेतरैर्दुष्करतर मप्यस्यसुकरमेवेति बोधनेनविचित्रशक्तियोगोद्दढीक्रियते ॥ २७ ॥

(भाषार्थ) आधार रहित शेषजी इस विश्वको कैसे धारण करते हैं, यह शङ्का यदि किसीके मनमे उत्पन्न हो तो उसे यह जान कर चुप हो रहना चाहिए कि उनके मायाका यह प्रभाव है, लोकमेभी ऐसे अनेकों उदाहरण विद्यमानहैं जैसे कि कोई नट आकाशमें चढ़ता है और नृत्य करते हुए उतर भी आता है इसी प्रकार अनेकों कुतर्कों को दूर करते हुए जो कठिनसे कठिन समस्यायोंका निर्णय (हल) करते हैं उन श्रीमान् दीनोंके रक्षक श्री लक्ष्मणजीके मै शरण हूं

(एतेनवेदानामपि दुर्ज्ञेयत्वमाह)

महाश्चर्य्यागारं त्रिविधचिदचित्लोकनिवहं,
समुद्यन्नश्यन्तंप्रतिकलयतश्शक्तिजलधेः ।
अनन्तत्वोच्छेदाच्छ्रुतिरपिनयस्यान्तमगमत्,
प्रपद्ये श्रीमन्तं कृपणशरणं लक्ष्मणमुनिम् ॥२८॥

(अन्वयः) समुद्यन्नश्यन्तंमहाश्चर्य्यागारंत्रिविधचिदचित्लोकनिवहंशक्तिजलधेः प्रतिकलयतः, यस्य अन्तम् अनन्तत्वोच्छेदात्, श्रुतिरपि, नागमत्, तं श्रीलक्ष्मणमुनिम् प्रपद्ये ।

(व्याख्या) पूर्वं समुद्यन्पश्चान्नश्यन् इतिस्नातानुलिप्तवत्समासःसमुद्यन्नश्यन्तमित्यस्य—उत्पद्यमानलीयमानमाविर्भावतिरोभाववदित्यर्थः, महान्तिचतान्याश्चर्य्याणिचतेषामगा

अत्यन्त तस्थानम्, त्रिविधस्त्रिप्रकारकोयश्चिदचित्लोकश्चेतना चेतनभुवनंतस्यनिवहस्समूहस्तन्तथोक्तम्, ( समूह निवहव्यूह संदोहविसरव्रजाइत्यमरः ) शक्तिजलधेस्सामर्थ्यसमुद्रस्य, प्रतिकलयतोगणयतः, यस्य श्रीलक्ष्मणास्य, अन्तंपारम्, अनन्तस्यभावोऽनन्तत्वंतस्योच्छेदात्–असीममाहात्म्यनाशात्,श्रुतिरधिवेदोऽपि,नागमन्नायासीत्, तं श्रीलक्ष्मणमुनिंप्रपद्ये- चितांबद्धमुक्तनित्यभेदेन त्रैविध्यम्, अचितांप्रकृतिकालशुद्धसत्वभेदेन त्रैविध्यंमन्तव्यम् ।

( तात्पर्य विवरणम् )

तदेवंनिरतिशयमाहात्म्यंप्रतिपाद्येदानींस्वतःसर्वज्ञकल्पेनसर्वार्थावद्योतिना वेदपुरुषेणाप्यपरिच्छेद्यप्रभावत्वंप्रतिपाद्यते'महाश्चर्यागारमित्यादिनापद्येन' महाश्चर्य्यागारमित्यनेन 'मेघोदयःसागरसन्निवृत्तिरिन्दोर्विभङ्गाःस्फुरितानिवायोः। विद्युद्विभङ्गोगतिरुष्णरश्मे विष्णोर्विचित्राः प्रभवन्ति मायाः' इत्युक्तरीत्यान्यत्राप्यपरि दृष्टचराणां विस्मयावहपदार्थानाँसत्त्वंब्यज्यते । त्रिविधचिदचित्लोकनिवह'मित्यनेन बद्धमुक्तनित्यभेदेनजीवानां त्रिगुणकालशुद्धसत्वभेदेनाचेतनानाञ्चभेदो विवक्षितः । समुद्यन्नश्यन्तमित्यनेन यथार्हं षड्भावविकारा वोध्यन्ते । प्रतिकलयतः' इत्यनेन साधर्म्यवैधर्म्याभ्यां परस्परासंकीर्णरूपेण ज्ञानेन सर्वज्ञत्वं व्यज्यते । शक्तिजलधे'रित्यनेन कार्य्योपयोग्यपृथक्सिद्ध विशेषण वैशिष्ट्यं प्रतिपाद्यते । अ-

तिरपि न यस्यान्तमगमदित्यनेन श्रूयते नित्यमिति श्रुतिरि
ति व्युत्पत्यनुसारेण पौरुषेयत्वगन्धरहितेन वेदेनापीयत्तावधा
रणं कर्तुं नशक्यत इति प्रतिपाद्यते । तत्रहेतुः 'अनन्तत्वोच्छे
दादित्यनेनोच्यते । इयत्तावधारणेहिअनन्तत्वमुच्छिद्येतेति ।
अत्रब्रह्मविदाप्नोतिपरमित्यारभ्य 'सत्यं ज्ञान मनन्तं ब्रह्मे
तिस्वरूपनिरूपकधर्मैब्र र्ह्म निरूप्य मनुष्यानन्दादारभ्यशतगु
णितोत्तरक्रमेणानन्दगुणपरिच्छेदंकर्तुमुद्यताऽपरिच्छेद्यतया
नन्दस्य तं परिच्छेत्तुमपारयन्ती 'यतोवाचोनिवर्तन्ते अप्राप्य
मनसा सह' आनन्दं ब्रह्मणो विद्वान्नविभेतिकुतश्चनेतिवाङ्
मनसागोचरतयाऽपरिच्छेद्यतां व्यञ्जयन्ती श्रुति रनुसन्धेया ।
तदनुसारिण्यश्च 'उपर्युपर्यब्जभुवोऽपिपूरुषान्प्रकल्प्यते येशत
मित्यनुक्रमात् । गिरस्त्वदेकैकगुणावधीप्सया सदास्थितानोद्य
मतोऽतिशेरते' आनन्दानन्त्यमाहश्रुतिरिहहियतोवाचइत्यादि
कास्या द्विश्रान्तिः श्रान्तिमात्रादितिच निगदितं यामुनाचार्य
वर्यैः । नह्यानन्दोमितःस्याद्विधिशतवचनेऽप्यस्यषष्ट्यान
भौवत्तत्वोक्त भूभृदणवो रुदधि पतितयो र्मज्जनेको विशेषः
इत्यादय आचार्यश्रीसूक्तयोऽप्यनुसन्धेयाः ॥ २८ ॥

( भाषार्थ ) प्रथम उत्पन्न होकर पश्चात् नाशको प्राप्त हो
ते हुए बड़े भारी आश्चर्यके स्थान त्रिविधचेतन बद्ध—मुक्त
नित्य-तथात्रिविध अचेतन प्रकृति-काल-शुद्धसत्व-संसारको
अपने अगाध शक्तिसे गणना करने वाले जिन श्री लक्ष्मण

जीके अन्तको असीम माहात्म्यके नाशके भयसे वेद भी नहीं पा सका उन श्रीमान् दोनोंके रक्षक श्रीलक्ष्मणजीके शरण में प्राप्त हैं ।

( इत्यनेन सर्वसोमहीयस्त्वमाह )

पृथिव्याद्यावृत्त्युत्तरदशगुणो विश्वनिचयो–
यतोरोम्णांरन्ध्रे भ्रमतिवयसाणु स्समिव ।
यदङ्के ऽसौशेते कथयितुमलं कस्तदुदयं–
प्रपद्येश्रीमन्तं, कृपणशरणंलक्ष्मणमुनिम् ॥२६॥

( अन्वयः ) पृथिव्याद्यावृत्त्युत्तरदशगुणः, विश्वनिचयः, यतः, रोम्णांरन्ध्रे वयसासमम्, अणुरिव भ्रमति असौ यदङ्के, शेते तदुदयम्, कथयितुं कः, अलम्, तं श्रीलक्ष्मणमुनिं प्रपद्ये–

( व्याख्या ) पृथिव्यादीनां पृथिव्यप्तेजोवाय्वाकाशाना मावृतय आवरणानि, एव, उत्तरोत्तर मनुक्रमेणदशगुणा यस्य सः, विश्वस्यजगतो निचयोनिकरः, यतोयस्य, इतराभ्योऽपिदृश्यन्ते ( सू० ) पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्तइतिनियमादत्र षष्ठ्यन्तात्तसिल् बोध्यः रोम्णां तनूरुहाणाम्, रन्ध्रे छिद्रे, वयसाकालकृतावस्थया, समंसाकम्, अणुरिव परमाणुरिव, भ्रमतीतस्ततःसंचलति, असौप्रसिद्धः श्रीविष्णुः, यस्यशेष स्याङ्के क्रोडे, शेतेस्वपिति, तस्यशेषावतारस्य श्रीलक्ष्मणस्य, उदयमुत्कर्षम्, कथयितुं वर्णयितुम्, कोजनः, अलंसमर्थः, तं श्रीलक्ष्मणमुनिं प्रपद्ये–

( तात्पर्य विवरणम् )

तदेव मनन्यसाधारणं सर्वाश्चर्यैकरं माहात्म्यं श्रुत्याप्यपरिच्छेद्य गुणगणानन्त्यञ्च प्रतिपाद्येदानीं भगवदपेक्षयाप्याधिक्यं वर्णयन्ति पृथिव्यादीति । तत्र भगवतः सर्वापेक्षया वैभवं प्रथमार्धेन प्रतिपाद्यते । "यदण्डमण्डान्तरगोचरञ्च यद्दशोत्तराण्यावरणानियानिचेतियामुनाचार्यानुगृहीतरीत्यापृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहद्रूपाणि यानि दशोत्तराण्यावरणानि तैर्वेष्टितोऽयंचतुर्दश भुवनरूपी विश्वनिकरो भगवतो विश्वव्यापकस्य श्रीमन्नारायणस्य रोम्णां विवरे कालकृतषड्भावविकारैः साकमनिरुद्धः परमाणुरिव परिभ्रमतीत्यनेन परमात्मस्वरूपापेक्षया दशोत्तरावरणावृत विश्वनिचयस्य परमाणुसादृश्य वर्णनेन भगवतो निरङ्कुशवैभवमचिन्त्यं व्यज्यते । इत्थं पूर्वार्धेन भगवतो विश्वनिचयस्यापि परमाणुसादृश्यापादनक्षमं वैभवं प्रकाश्येदानीं तादृशभगवतोऽप्यादिशेष शरीरैकदेशाङ्क प्रदेशशयनवर्णनेन भगवदपेक्षया प्याधिक्यं "यदङ्केऽसौशेते" इत्यनेन प्रतिपाद्यते । अथ "यतोवाचो निवर्तन्ते अप्राप्यमनसा सह, आनन्दं ब्रह्मणो विद्वान्नबिभेति कुतश्चन" इति श्रुत्याप्यपरिच्छेद्य महित्वेन कीर्तितं भगवन्त मपेक्ष्यापि श्रीशेषाधिक्यस्यसिद्धतया तदुत्कर्षः कैमुतिकसिद्ध इति पूर्वश्लोकार्थमुक्तहेतुना दृढयन्ति "कथयितुमलं कस्तदुदयमिति ।

( भावार्थ ) पृथिव्यादिकों का उत्तरोत्तर दशगुणा आवरण है जिसमे ऐसा विश्व समूह कालचक्रके सहित जिनके रोमरन्ध्रोंमें परमाणु की तरह घूम रहाहै ऐसे श्रीमन्नारायण भी जिनके अङ्कमे सोतेहैं, अतः उनके अति विशाल स्वरूप गुणवैभवादि के अभ्युदय को कहनेके लिए कौन समर्थ हो सक्ता है ऐसे श्रीमान् दीनों के रक्षक श्रीलक्ष्मण जी के शरण मे प्राप्तहैं ।

( अनेन लक्ष्मणारामस्य विश्वतोऽपि गौरवमाह )

प्रपञ्चेवैरिञ्चेऽतिथिसुयजनंवैष्णवकुलं–
कदाचिन्नीवैंशार्चितरुचिरसौमित्रिविपिनम् ।
उपेत्य श्रीसीतारमणदयनीयोविजयते,
प्रपद्येश्रीमन्तं कृपणशरणं लक्ष्मणमुनिम् ॥३०॥

( अन्वयः ) वैरिञ्चे प्रपञ्चे, अतिथिसुयजनं वैष्णवकुलं नीवैंशार्चितरुचिर सौमित्रिविपिनं कदाचित्, उपेत्य श्रीसीतारमण दयनीयः ( यः ) विजयते तं श्रीलक्ष्मणमुनिं प्रपद्ये –

( व्याख्या ) विरिञ्चेरिदंवैरिञ्चं तस्मिन् वैरिञ्चे प्रजापति निर्मिते, तस्येदमित्यण्, प्रपञ्चे विस्तरे,जगतिवा, अतिथिषु विषयेशोभनंयजनं यस्मिन्तत् अभ्यागतसमीचीनसत्कारम् विष्णोरिदंवैष्णवं विष्णुसम्बन्धिकुलं यस्मिन् तत् नीवैंशैर्वान्धवाधिपै रर्चितंपूजितं यत्सौमित्रिविपिनं लक्ष्मणारामम्, कदाचित् कस्मिन्नपिकाले, उपेत्य प्राप्य, श्रीसीता

रमणस्यदयनीयः श्रीसीतारमणदयनीयः श्रीरामचन्द्रकृपैकभाजनम्, यः श्रीलक्ष्मणः, विजयतेसर्वोत्कर्षेणवर्तते, तं श्रीलक्ष्मणमुनिंप्रपद्ये—

( तात्पर्य विवरणम् )

तदेवमेकोनत्रिंशत्पद्यैर्लक्ष्मणाख्यं कल्याणगुणगणमहोदधिमवतारान्तरैरवगाह्याश्रितजनवात्सल्यैकविवशतयालक्ष्मणारामे "विम्वाकृत्यात्मनाविम्वे समागत्यावतिष्ठते' इत्युक्तरीत्यार्चावताररूपेणावस्थितं श्रीलक्ष्मणं वर्णयन्ति 'प्रपञ्च' इत्यादिना पद्येन । तत्र लक्ष्मणस्यावतरणविषये इतरस्थलापेक्षयास्य स्थलस्य वैशिष्ट्यंप्रथमार्धेनोच्यते । प्रथमार्द्धेन सर्वस्याभ्यागतो गुरुरित्यभिहितरीत्या गुरुकल्पाना मभ्यागतानां प्रीणन मन्यत्रादृष्टचरमिहैव प्रवर्तत इत्येकोवैशिष्ट्यहेतु रभ्यधायि वैष्णवकुल मित्यनेन 'यत्रैकाग्र्यं भवति भगवत्पादसेवाचनादे र्यत्रैकान्त्य व्यवसितधियो यस्यकस्यापि लाभः, वासस्थानं तदिह कृतिनांभाति वैकुण्ठकल्पंप्रायोदेशा मुनिभिरुदिताः प्रायिकौचित्यवन्तः । साकाशीति न चाकशीतिभुविसायोध्येति नाध्यास्यते सावन्तीतिनकल्मषा दवतिसा काञ्चीतिनोदञ्चति । धत्तेसा मधुरेति नोत्तमधुरां नान्यापि मान्यापुरीया वैकुण्ठ कथासुधा रसभुजां रोचेत नोचेतसे' इत्युक्तरीत्यान्य मुक्तिक्षेत्रादप्युत्कर्षो व्यज्यते । राजपूजितताद्वितीयपादेन वर्ण्यते । कदाचिदित्यस्योपे त्येत्यनेनान्वयः । लक्ष्म

णारामस्य शोभायुक्ततया दृष्टिहरत्वं व्यज्यते। 'सौमित्रिवि पिन मित्यनेन स्वनाम्नैव प्रसिद्धि र्ध्वन्यते। 'सीतारमणादय नीय इत्यनेन सीतया रामेण चावतरणार्थं कृपया निय मितता व्यज्यते। विजयत इत्यनेन सर्वोत्कृष्टस्थानलाभात्स्व स्यापि सर्वोत्कर्षः प्रतिपाद्यते। तादेव मतिथि पूजनेन वैष्ण वाभिमानेन राजपूजिततया रुचिरतयाच स्थानस्य सर्वोत्कर्ष मवगत्यार्चावतार रूपेणावस्थितिः प्रत्यपादि ॥ ३० ॥

( भाषार्थ ) ब्रह्माकी सृष्टिमे अतिथियोंका सन्मान है जिस में, और जहां वैष्णवोंका बृन्द विद्यमान है और जो रीवां नरेशसे सर्वकालमे पूजित है ऐसे श्रीलक्ष्मणबागमें श्रीराम चन्द्रजीके कृपापात्र जो ( श्री लक्ष्मणजी ) किसी कालमे प्राप्त होकर सर्वोत्कर्षसे विराजमान हैं उन श्रीमान् दोनोंके रक्षक श्रीलक्ष्मणजी के शरण मे प्राप्त हैं।

( एतेनप्राचीनराजर्षि गणाद्बान्धवपतेर्गरीयस्त्वमाह )

दिलीपाद्यैर्भूपैरपि तनयसन्नामकरणे,
ष्वदेयाँ श्रीरीवाँधिपवर गुलावो गुरुकरे।
यदाप्त्यैदत्वादीव्यति सुविभुतांचामरयुतां,
प्रपद्ये श्रीमन्तंकृपणशरणं लक्ष्मणमुनिम्।

( अन्वयः ) श्रीरीवाँधिपवरगुलावः, दिलीपाद्यैः, भूपैर पि,तनयसन्नामकरणेषु, अदेयां चामरयुतां विभुतांयदाप्त्यै गुरुकरे दत्वा दीव्यति तं श्री लक्ष्मणमुनिम् प्रपद्ये—

( व्याख्या ) रीवाया अधिपास्तेषुवरः सचासौगुलाबश्च श्री वान्धवेशगुलाबसिंहः, दिलीपाद्यैर्दिलीपप्रभृतिभिः, भूपैरपि नृपैरपि, तनयानां सन्नामकरणेषु पुत्रशुभनामकरणादिषु, अदेयामनतिसर्जनीयाम्, चामराभ्यांयुतां बालव्यजनसहिता म्, सुविभुतांशोभनविभूतिम्, यस्य श्रीलक्ष्मणस्य,आप्त्यैसा त्तात्कृत्यै, गुरोः करेगुरुकरे आचार्य्यपाणिपद्मे, दत्वाप्रदाय दीव्यति सुखमनुभवति, तं श्रीलक्ष्मणमुनिम् प्रपद्ये–

( तात्पर्यं विवरणम् )

इदानीं श्रीलक्ष्मणप्रसादासादनाय श्रीमता गुलाबसिंहाभि धामरीवानरेशेन तनयसन्नामकरणे श्रीस्वामिनोः करारविंद योः समग्रस्य लक्ष्मणाग्रामविराजमानगुरुस्थानाधिपत्य स्यवि तरणाख्यं वृत्तान्तं निवध्नन्ति दिलीपाद्यै रित्यादिनापद्येन दिलीपादिभ्योऽप्यतिशयितत्वं राज्ञः प्रतिपाद्यते प्रथमार्धेन दिलीपादयोहि तनयसन्नामकरणादिषु शुभनिमित्तेषु 'अदेय मासीत्त्रयमेव भूपतेः शशिप्रभंछत्रमुभेच चामरे इत्युक्तरीत्या राजलक्षणभूतच्छत्रचामरव्यतिरिक्तमन्यत्सर्वं वितेरुः अयं पुनर्महाराजः पुत्रनामकरणमहोत्सवे चामरयुतां सुविभुतां वितताररेति दिलीपादिभिरदेयस्यार्थस्य समर्पणेन तेभ्योऽ प्युत्कर्षो व्यज्यते, चामरग्रहणं छत्रादीना मप्युपलक्षणम् य दाप्त्यै इत्यनेनैतादृशसमर्पणस्य लक्ष्मणप्रसादार्थत्वबोधना त्सात्विकत्यागो व्यज्यते । दीव्यतीत्यनेन सर्वेषामपि कार्य्या

णां स्वामिभिरेव निर्वहणा न्निश्चिन्तं विधीयमानाः संभावितास्सर्वेऽपि 'दिवु' धात्वर्था बोध्यन्ते ॥ ३१ ॥

( भाषार्थ ) श्रीमान् महाराज गुलावसिंह जू देव दिलीपादि महाराजाओं से भी स्वपुत्र नामकरणादि मे अदेय छत्रचामरादि सहित सुन्दर ऐश्वर्यको जिन ( श्रीलक्ष्मण जो ) के प्रसन्नता के ही लिए गुरु के हांथ मे देकर आनन्दित हैं उन श्रीमान् दीनोंके रक्षक श्रीलक्ष्मण जी के शरण मे प्राप्त हैं।

( भावार्थ ) जब महाराजा दिलीप के पुत्र ( रघु ) हुए थे उस समय शुभ समाचार सुनाने वाले को छत्र और दो चामरों के अतिरिक्त और कोई वस्तु अदेय नहीं हुई, किन्तु महाराजा गुलाव सिंह जू देव ने स्वपुत्र मार्तण्ड सिंह जू देव के नाम करणके समय छत्र चामरादि भी गुरूके हांथ मे समर्पण कर दिया, इस विषय का वर्णन भली भांति कविकुल तिलक कालिदास जी ने किया है। यथा—अदेयमासी त्त्रयमेवभूपतेः शशिप्रभंछत्र मुभेचचामरे, इत्यादि

श्रेयत्कस्तनयोऽपिवान्धवजनोल्लास स्तमोदुन् पान्—
जित्वादिग्वनिताःकरैर्भृ शमलं कुर्वन्सममसूनुना॥
श्रीगोविन्दगुलावकीर्तिसुरभें, भूत्वान्यदेशाधिपो—
मार्तण्डःप्रणमन्भवन्तमनिशं श्रीलक्ष्मणांसेवताम्,

( अन्वयः ) कीर्तिसुरभे श्रीगोविन्द गुलाव वान्धवजनोल्लासः

श्रैमत्कः तनयः, मार्तण्डोऽपि सूनुनासमं तमोदुर्नृपान्, जित्वा, अन्यदेशाधिपः, भूत्वा, दिग्वनिताः करैः, अलंकुर्वन्, भवन्तं भृशंप्रणमन्, अनिशं श्रीलक्ष्मणं सेवताम्–

( व्याख्या ) कीर्त्यायशसा सुरभिर्मनोज्ञस्तत्सम्बुद्धौ हेकीर्ति सुरभे. श्रीगोविन्द गोविन्दसिंह, हेगुलाव श्रीगुलावसिंह, वान्धवनरेश, ( गोविन्दसिंह इति वान्धवेशस्य वैष्णवीय पञ्चसंस्कारोत्पन्नंनाम ) वान्धवजनानुल्लासयतीति वान्धव जनोल्लासोवान्धवराज्यप्रजाप्रमोदवर्द्धकः, श्रीमतश्चयं श्रैमत्कः भवदीयः, तनयः पुत्रः, मार्तण्डोऽपि मार्तण्डसिंहोऽपि सूनुना स्वपुत्रेण समं साकम्, तमांसीवदुर्नृपा स्तमोदुर्नृपा स्तान्तमोदुर्नृपान्, तिमिरमहीपालान्, जित्वावशीकृत्य, अन्यदेशस्याधिप अन्यदेशाधिपः जनपदान्तरस्वामी, भूत्वा, दिशइववनिता दिग्वनिता आशाङ्गनाः, करैर्निजपाणिपद्मैः, अलङ्कुर्वन् विभूषयन्, भगवन्तंत्वां भृशमत्यन्तम् प्रणमन् परिचरन्, अनिशंनिरन्तरम्, श्रीलक्ष्मणम्, सेवताम्, श्रयताम्, एतेनभवान् दिग्विजयिनापुत्रेण पौत्रेणच साकमनन्तकालं राज्यसुखमनुभवत्विति नितरामाशीर्वादोक्तिर्व्यज्यते–

अथवा, गुलावस्य कीर्तिरिवसुरभिः कामधेनुर्यस्य तत्सम्बुद्धौ हे गुलावकीर्तिसुरभे, तयैवधेन्वा वृन्दारण्ये अभिषिक्तः सगोविन्द इतिसंज्ञां लब्धवान्, ) अथवा गुलावस्य कीर्तिरेव सुरभिर्घ्राणतर्पणं यस्यतत्सम्बुद्धौ हेगोविन्द अवताराभेदेन

हे श्रीमन्नारायण, बान्धवजनान् विष्णुभक्तानुल्लास यतीति-बान्धवजनोल्लासः, (बान्धवा विष्णुभक्ताश्चेत्यनुसन्धेयम् ) श्रीमत अयं श्रैमत्कोभावत्कः, अपि तनयः पुत्रः मार्तण्डः श्री सूर्य्यः, ( चक्षोः सूर्य्योऽजायतेति श्रुत्यनुसारेण श्रीसूर्य्यस्य भगवन्नेत्रादुत्पत्तिरत स्तदीयत्वेनव्यवहारः ) सूनुनास्वपुत्रेण समम्, तमान्सिदुर्नृपाङ्गवतान्, जित्वा विनाश्य, अन्यदेशाधिप आकाशातिरिक्तपातालस्यापि अधिपःस्वामी, भूत्वा, दिशोव निताइव ताः, करैः किरणैः, ( बलिहस्तान्शवः कराइत्यमरः) अलंकुर्वन् प्रकाशयन्, भवन्तमभृशंप्रणमन्, उदयास्त व्याजेने ति भावः, श्री लक्ष्मणम, सेवताम, अथवा, हेगुलाबकीर्तिसु रभे, हेगोविन्द कृष्णचन्द्र, बान्धवजनोल्लासः यदुवंशिप्रजा नुरञ्जकः, श्रैमत्कः, तनयः, प्रद्युम्नोऽपि, मार्तण्डःसन् सूर्य्यस मानवर्चस्कः, सूनुनापुत्रेणसमम, तमोदुर्नृपान्, तिमिरमहीपाला न्जित्वा, अन्यदेशाधिपः षट्पुरादिजनपदान्तरपालकः, भूत्वा, दिग्वनिता आशाङ्गनाः, करैर्निजपाणिसरोरुहैः, अलंकुर्वन्, भवन्तंवाम, भृशम, प्रणमन्, अनिशम, श्रीलक्ष्मणमवता रान्तरेणश्रीबलभद्रम, सेवताम,

अथवा, गुलाबकीर्तिसुरभे, हेगोविन्द श्रीरामचन्द्र अस्मिन्प क्षेचोक्तद्वितीयव्याख्या गुलाबस्यकीर्तिरेवसुरभि घ्राणत र्पणंयस्येत्यनुसन्धेया, बान्धव जनोल्लासः रघुवंशिभूपालप्रमो दकारी, श्रैमत्कः तनयः कुशोऽपि मार्तण्डःसन्, सूनुनास्वानुजे

नसमम् तमोदुर्नृपान्जित्वा, अन्यदेशाधिपः, भूत्वा,विन्व नताः, करैः अलंकुर्वन् भवन्तंत्वाम्भृशम् प्रणमन् अनिशम् श्रीलक्ष्मणम् सेवताम् अज्ञातसम्बन्धेन श्रीलक्ष्मणसंग्राममेवि जित्यापिजनन्युपदेशेनज्ञातसम्बन्धं श्रीलक्ष्मणं सेवतामिति तात्पर्य्यम्

( तात्पर्य विवरणम् )

तदेवंचामरयुताधिपत्यसमर्पणरूपं वृत्तान्तमभिधायग्रन्थान्ते पुत्रपौत्रादिसमेतस्य श्रीमतो महाराजस्यपुत्राद्याशीर्वादमुखे नमंगलाभिवृद्धिमाशासते श्रैमत्क इत्यादिना पद्येन । राजकु मारस्य 'मार्तण्ड'इति संज्ञांसूर्यसाधारणगुणवर्णनेनान्व र्थी ध्वनयन्तो राज्याभिवृद्धिपितृभक्तिगुरुभक्तिदेवभक्तिप्र भृतीनेकोक्त्यैवाशंसन्तेश्रैमत्कस्तनयोऽपीति धर्मिनिर्देशः अपि शब्देनेतरेषांसमुच्चय आशास्यमान विषयानां कुलक्रमागतसर्व महीपाल निष्ठत्वंवाबोध्यते बान्धवजनोल्लासः इत्यनेनयथा दिवसकरस्सर्वानपिजनान् बान्धवदभिमत्योल्लासयति तद्वद यमपि बान्धवराज्यास्थितानां प्रजानां सन्तोषाभिवर्द्धकोभव त्विस्याशास्यते । तेन ,राजा प्रकृतिरञ्जनात्' इत्युक्तरीत्यान्वर्थ शब्दबोध्यत्वं सिध्यति तमोदुर्नृपाञ्जित्वेत्यनेन यथा सूर्यःत मांस्यभिभवति तद्वदयमपि दुष्टान् नृपाञ्जयत्विति ज्ञाप्यते तमो दृष्टान्तेन सहस्रभानो परिश्रम मन्तरा तमोनिरास सिद्धिवत्तत्सारथिनारुणेनैव तन्निरसनवच्चेहापि परिश्रमं

क्तिर्नैवजयावाप्तिःसैनिकैरेवजयसाधनञ्चव्यज्यतेदुर्नृपानितिदुर्शं
ब्देननृपाणांदुष्टत्वस्यबोधनाद्दण्ड्यानामेव दण्डनस्य ध्वननेन
"अदण्ड्यान् दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन्, अयशोमह
दाप्नोतिनरकञ्चैवगच्छति" इत्युक्तदोषास्पृष्टत्वंव्यज्यतेदिग्वनिता
करैर्मृशमत्वंकुर्वन्नित्यनेनयथासहस्रमरीचिर्दिगन्तपर्य्यन्तंमयूखै
र्व्याप्नोति तद्वदयमपिदिगन्तपर्य्यन्तं विस्तृतराज्योभवत्वित्या
शास्यतेकिञ्चकरशब्दस्यप्रजादेयद्रव्यपरतया दिगन्तवास्तव्याः
प्रजा अप्यस्मै करान्दद्युरित्याशासनेन राज्यस्य दिगन्तव्याः
पित्वंकिम्पुनर्न्यायेन सिध्यति। समं सूनुनेत्यनेनाजहल्लक्षणया
भाविनां सर्वेषामपि राज्ञां मंगल माशासितं भवति।
"श्रीगोविन्दगुलावेति" अधुनातन महाराजस्य संबोधनम्।
कीर्तिसुरभे, श्रीमत्क इत्यनेनच साम्राज्य परिपालनादिभि
रधुनातन महाराजस्य दिगन्तविस्तारि कीर्तिसुरभिलत्वस्य
श्रीमत्त्वस्य च बोधनेनैतद्वंशीयानाँ पूर्वेषां पश्चात्तना
नामपिराज्ञां कार्यकारणयोः समानगुणकत्व नियमेनाशास्यमान
मंगलाना मवश्यंभूततायाअवश्यंभाविताया श्च व्यञ्जनेनाशी-
र्वादस्यामोघता ध्वन्यते। अन्यदेशाधिपो भूत्वेत्यनेन दुर्नृप-
जयफल मन्यदेशाधिपत्य मुच्यते। मार्तण्ड इति पश्चान्ना
मग्रहणेन सूर्यगुणयोगेन नाम्नोयाथार्थ्यं सिद्धमिति
व्यज्यते। प्रणमन् भवन्तमिति पितृभक्तिः श्रीलक्ष्मणं सेवता
मिति देवभक्तिस्तेनैव लक्ष्मणारामवास्तव्यगुरुभक्तिश्चेति

भक्तित्रितय माशासितं भवति । अनेनश्लोकेन प्रजारञ्जकत्वं दुर्नृपजेतृत्व मन्यदेशाधिपत्यं पितृभक्तिर्देवभक्तिर्गुरुभक्ति रित्येते अन्येऽपि नान्तरीयका अर्था आशासिता इति सिद्धम् ॥ ३२ ॥

( भाषार्थं ) कीर्तियोंसे मनोहर गोविन्दसिंहोपनामक हे महाराज गुलावसिंह जू देव बांधव राज्यके प्रजाको आनन्दित करने वाले आपके पुत्र चिरंजीव श्रीमार्तण्ड सिंह जू देव जी अपने पुत्रको साथ मे लेकर अन्धकार स्वरूप ( अज्ञानी ) दुष्ट नरेशोंको जीत कर तथा अन्यदेशोंके अधिप होकर दिग्वधूटियों को अपने करकमलों से अलङ्कृत करते हुए आप मे अतिशय अगाढभक्ति रखते हुए निरन्तर श्रीलक्ष्मण जी की सेवा करैं।

इस श्लोकके अन्यभी तीन अर्थ विष्णु–कृष्ण–राम–के पक्ष के हैं जो संस्कृत टीका मे भली भांति समझाए जा चुके हैं। विस्तार भयसे उनका हिन्दी मे अनुवाद नहीं किया गया।

एतेनग्रन्थान्ते मंगलमाचरणीयमित्युक्तप्रकारेणाशीर्वाद रूपंमङ्गलमाह–

आम्नायदेववनपुष्पमहीपजात–
श्रीसम्प्रदायमकरन्दमहाब्धिमग्नाः–
सूरीन्द्रवृन्दमधुपावलयोरमन्तां

गोविन्दकीर्तिकृतिबान्धवराजधान्याम् ॥ २३ ॥

( अन्वयः ) आम्नायदेववनपुष्पमहीपजातश्रीसम्प्रदाय मकरन्दमहाब्धिमग्नाः सूरीन्द्रवृन्दमधुपावलयः गोविन्द कीर्तिकृति, बान्धवराजधान्याम्, रमन्ताम्,—

( व्याख्या ) आम्नायोवेदएव देवबनममरोद्यानं मन्यत्राम्नाय इवदेववनं लक्ष्मणारायन्तत्रयः पुष्पमहीप उपनिषद्भागोऽन्यत्र गुलाबसंज्ञकस्तस्माज्जात उत्पन्नः अन्यत्रविवर्द्धितो, यः श्रीसम्प्रदायः सएव मकरन्दः श्रीसिद्धान्तरस स्तस्यमहाब्धि-र्महासमुद्र स्तस्मिन्मग्नाः संसक्ताः सूरीन्द्रवृन्दामधुपाइव अन्यत्रसूरीन्द्रबृन्दा इवमधुपा स्तेषामावलयः श्रेणयः, गोविन्द कीर्तिकृति भगवद्यशःप्रकाशिकाया मन्यत्रगोविन्दसिंह प्रशंसाविष्कारिकायाम्, ( गोविन्दसिंहइति रीवांनरेशस्य वैष्णवीयपञ्चसंस्कारोत्पन्नंनाम ) श्रीलक्ष्मणेसंघटतेहिबन्धोः स्नेहेनबध्नातियतोऽयमर्थइति बचनानुसारेण वन्धुत्वं श्रीलक्ष्मणएव संघटतेततश्च बन्धोरिमेवान्धवा श्रद्दत्तारान्तरेण रामानुजीया स्तेषांराजधान्यां श्रीरामानुजसिद्धान्तकथायाँ प्रसिद्धायां तन्नामक राजधान्याञ्च, रमन्तां विहरन्तु—

( तात्पर्य विवरणम् )

तदेवं सकुटुम्बस्य श्रीमतो महाराजस्य मंगलमाशास्येदानीं ग्रन्थान्ते वैष्णवानन्दोद्देश्यकाशीर्वादरूपं मंगलंनिवध्नन्ति "आम्नायेत्यादिना पद्येन"। देववनं यथा नानाजाति भिन्नानां

सर्वेषामपि पक्षिणां भृङ्गाणाञ्च फलमकरन्दप्रदानेन पान्थानाँ छायादिप्रदानेन सन्तोषमभिवर्द्धयति । तथा वेदोऽपि ब्राह्मणक्षत्रियवैश्यशूद्राणाँ सर्वेषामपि चातुर्वर्णिकानाँ ॐकारीर्यादिभि ज्योंतिष्टोमादिभिश्चैहिका मुष्मिक फलल-म्भनेन सुखमभिवर्द्धयतीति आम्नायस्य देववनत्वेन वर्णनाद् ध्वन्यते । पुष्पमहीप इत्यनेन कुसुमप्रधानवृक्षस्थाने उपनिषद्भागो निर्गीर्याध्यवस्यते ।

उपनिषद्भागावष्टम्भेन संशयविपर्ययंध निरसनपूर्वक मधिक रणागर्यैर्निर्धारितस्य श्रीसंप्रदायस्य मकरन्दत्वेन वर्णनात्स्वतो-हृद्यत्व ममन्दानन्दजनकत्व मित्यादिकं व्यज्यते । रसाब्धिमग्ना इत्यनेन श्रीसंप्रदायनिर्धारितनानाविधप्रतितंत्रादि-सिद्धान्तान् मनवरतं "सन्तोषार्थं विमृशति मुहुः सद्भिरध्या सविद्यां नित्यं ते निशमयति च स्वादुसुव्याहृतानि" इत्युक्तरीत्या परिशीलिन स्तदेकनिरतात्मानः श्रीवैष्णव परमैकान्तिनः प्रतिपाद्यन्ते । सूरीन्द्रवृन्दमधुपावलयो रमन्तामिति पण्डितेन्द्राणाँ मधुकरत्वेन वर्णनात् "बहुभ्यश्च महद्भ्यश्च शास्त्रेभ्यो मतिमान्नरः । सर्वतः सार मादद्या त्पुष्पेभ्य इव षट्पद, इत्युक्तरीत्या सर्वतःसारसंग्रहीतृत्व रूपो माधुकरोगुणोव्यज्यते । गोविन्दकीर्तिकृतीत्यनेन सर्वतो भगवद्भागवतालय समृद्धतया भगवत्कीर्तिप्रसार-

टि० ( ॐ कारीरी यज्ञविशेषः ),

कतया भागतानामावासस्यानुगुणता बान्धवराजधान्या उच्यते । रमन्तामित्याशिषि लोटाशीर्वादरूपमंगलाचरणं व्यज्यते ॥ २३ ॥

( भाषार्थं ) वेद रूपी जो देवोद्यान तत्सम्बन्धी जो पुष्प महीप ( उपनिषद्भाग ) उससे उत्पन्न जो श्रीसम्प्रदाय रूपी मकरन्द ( पुष्प रस ) उसके समुद्र मे मग्न जो मधुप ( भ्रमर ) श्रेणियों के तरह सूरीन्द्रवृन्द ( विद्वद्वृन्द ) वे भगवान् की कीर्ति को प्रकाशित करने वाली श्रीरामानुज सिद्धान्त कथा मे सदैव अनुरक्त रहैं । द्वितीय अर्थ-वेद की तरह जो लक्ष्मणबाग उससे उत्पन्न जो पुष्प महीप (गुलाव ) ( गुलाबसिंह महाराजा ) उनसे प्रवर्तित जो श्रीसम्प्रदाय सम्बन्धीमकरन्द ( पुष्परस ) का समुद्र उसमे मग्न मधुप ( भ्रमर ) श्रेणियों की तरह जो विद्वद्वृन्द वे गोविन्दसिंह ( गुलाबसिंह ) के कीर्ति को प्रकाशित करने वालीबान्धव राजधानी मे सदैव विचरते रहैं ।

( इत्यनेन स्वकृतिसाफल्यमाह )

केचिद्विपश्चित्प्रवरा महान्तो-
निर्मत्सराः सन्त्यधुनाऽपिशान्ताः-
मत्वेतिसूक्तं बदरीशतुष्ट्यै-
श्रीलक्ष्मणस्तोत्रम भीष्टपुष्ट्यै ॥ २४ ॥

( अन्वयः ) महान्तः, निर्मत्सराः शान्ताः केचित् विपश्चित्

प्रवराः, अधुनापि, सन्ति, इति मत्वा, बदरीशतुष्ट्यै, अभीष्टपुष्ट्यै, ( च ) श्रीलक्ष्मणस्तोत्रं सूक्तम्—
( व्याख्या ) महान्तः प्रतिष्ठिताः, निर्मत्सराः मात्सर्यरहिताः शान्ताः शमदमादिगुणयुक्ताः, केचित् विरलाः विपश्चित्सु प्रवराः विपश्चित् प्रवराः विद्वद्वराः, अधुनापि इदानीमपि, सन्ति वर्तन्ते, इतिमत्वा विचार्य, बदरीशस्य तुष्ट्यै बदरीश तुष्ट्यै बदरीनारायणप्रसादार्थम्, अभीष्टानां पुष्ट्यै अभीष्ट पुष्ट्यै मनोरथसाफल्याय, श्रीलक्ष्मणस्तोत्रम् सूक्तं सम्यगुक्तम् बदरीशतुष्ट्यै, इतिपदेन सूक्ष्मतया ग्रन्थकृन्नाम्नोऽप्यभिधानम् बोध्यम् यदस्य स्तोत्ररत्नस्यकर्तारः श्री १०८ श्रीस्वामि बदरीप्रपन्नाचार्याः इति सर्वैं रवगन्तव्यम्—

( तात्पर्य विवरणम् )

तदेवं महाराजभागवतानामाशीर्वादरूपमंगलं विरच्येदानीं स्वग्रन्थस्य निर्दोषपन्डितोपादेयतया श्रीमन्नारायणप्रसाद जनकतया तद्द्वारा स्वस्यान्येषाञ्चाभीष्टपुष्टिसाधकतया चसाफल्यं निबध्नन्ति केचिद्विपश्चित्प्रवरा इति पद्येन । पूर्वार्द्धेन "येनामकेचिदिहनः प्रथयन्त्यवज्ञां जानन्ति ते किमपितान् प्रतिनैषयत्नः । उत्पत्स्यते ममतुकोऽपि समानधर्मा कालोह्ययं निरवाधिर्विपुलाच पृथ्वी । सारासारविवेकज्ञा

